१८५

श्रीः।

अच्युतशर्मणाविरचिता

# भागीरथीचम्पूः ।

---ooo---

## प्रथममनोरथः ।

श्रीहेरम्बसरस्वतीगुरुपदब्रह्मेशलक्ष्मीपति-
ब्रह्मेन्द्रादिसमस्तदेवनिवहाः सर्वे ग्रहाः सर्वदा ॥
...त्रे चापि मुनीश्वराः शमपराः सर्वेऽपि वेदाः पुनः
...द्यः संकलयन्तु मङ्गलसुखं निर्विघ्नमस्मान्कवीन् ॥ १ ॥
...याङ्घ्रोग्रहणं शिरोर्मम कथं हन्तेति चिन्तातुरं
... दृष्ट्वैव हरिस्थितस्य तु गुरोरेव प्रसादादियम् ॥
संजातेह बृहन्नटेव सहसा गोदैव भागीरथी
यस्मान्मुक्तमुमुक्षुसद्विषयिणः पायादपायादसौ ॥ २ ॥

स जयति बिसशुक्लानन्तसूत्राढ्यकण्ठः
सितभसितसुधाक्तश्चिद्वटश्चन्द्रचूडः ॥
विनिहित इव यस्मिन्मुक्तिकान्ताकराग्र-
ग्रहणवचनसिद्ध्यै कोपि संविद्रसोयम् ॥ ३ ॥

जयति विरतिकान्तानन्तलीलाविलोलः
सकलमपि विभेदं ध्वंसयंस्तत्त्वबोधः ॥
अपि च निगममौलिप्रोल्लसन्मालतीस्र-
क्कुसुमुपमसुरङ्गः कोपि गाङ्गस्तरङ्गः ॥ ४ ॥

---

१ शान्ताः । २ दुःखात् ।

विदेहतनयाप्रियं गुरुगिराऽनभीष्टाश्रियं
कृताखिलरिपुक्षयं वितरितस्वमित्राभयम् ॥
विशोधितनिजाप्रियं हैततमोविहारोच्चयं
विशोभितयशोनयं गुरुवरं नमाम्यद्वयम् ॥ ५ ॥
यदीयस्तल्पोभूत्पदरसमवाप्तुं फणिपति-
स्तथा शिष्यो वाक्याद्रसितुममृतं जैमिनिरपि ॥
अलं मानार्थी यत्पदजलशुचिर्गौतममुनि-
र्नमस्तस्मै नारायणगुरुवरायात्मवपुषे ॥ ६ ॥
वल्मीकभूरपि न जिह्मगतिः कदापि
किञ्चामृतप्लुतमतैकरसज्ञ एषः ॥
आभाति कोपि कविकोटिकुलैकनागो
भाष्यं किमस्य कृपयैव फणी बभाषे ॥ ७ ॥
रसालङ्कारसाकारं मुक्ताब्जामृतवल्लभम् ॥
सुवर्णपक्षं रामाङ्घ्रिगतिं कविमुपाश्रये ॥ ८ ॥
यदग्रे तृणतामेति विबुधस्य बतामृतम् ॥
तन्महाभारतं येन कृतं तस्मै नमःशतम् ॥ ९ ॥
सुदृशां हृदयानन्दी विशुद्धः प्रतिभैधितः ॥
गुणाढ्यः पातु मां हारो दर्शनीयोऽतिरुन्नतः ॥ १० ॥

---

१ हतास्तमोविहाराः निशाचराः राक्षसाः तेषां उच्चयः समूहो येन अथ वा पापसमुच्चयः । २ सर्पवत्कुटिलगमनम् । ३ कवीनां कोटिकुलेषु अनन्तसमूहेषु एकनागइव अद्वितीयहस्तीव व्याघ्रादेराकृतिगणत्वात्समासः । ४ पतञ्जली ऋषिः । शेषावतारत्वात्फणीति । ५ रसाः शृङ्गारादयः अलङ्काराः उपमादयः तैः सम्यक आकारो यस्य । ६ उदकं पीयूषं च । ७ सम्यक् वर्णाः पक्षाश्च पूर्वोत्तराः यस्मिन् पक्षाः पक्षिणः । ८ रामाङ्घ्रि गतय गतिः वाल्मीकेः जटायोश्च ।

धन्यानां मृदुलपदाः सुवर्णरूपा
सद्वृत्ताः सरसगुणाः प्रसादशीलाः ॥
नानालङ्कृतिविलसद्ध्वनिप्रचारा-
श्चुम्बन्ति स्वरसत आस्यमीज्यवाचः ॥ ११ ॥

क्वांत क्वाति न वैहामुकानां गुणस्य विमाद्काः
प्रियतमपरीरम्भा रम्भाइव स्वजनैः खलाः ॥
तदपि सुदृशां तेपि प्रेम्णः किमत्र न पात्रता-
मुपययुरुपायास्यन्त्येवं स्मराद्युपयान्त्यपि ॥ १२ ॥

क्व सुबन्ध्वादिबन्धेपि बदनात्सदनादपि ॥
भारत्याश्च युवत्याश्च निःसृतिः किल जायताम् ॥ १३ ॥

प्राचीनैः सकलैः कवीश्वरवरैरानन्दितोयं जनो
यद्यप्येष तथापि नैव विफलो वाचां प्रचारो मम ॥
किं वासन्तिकनिष्कुटे पिकरुतैस्ततश्रुतीनामपि
जायन्ते सुदृशां मुदेन मृदुलाः पुष्पन्धयानां कलाः॥१४॥

सद्दोषैवेयं मे बत गतरसाऽप्रत्ययगुदया
सरस्वत्युन्मेषं भजति न यतो मानवतिका ॥
अतो भागीरथ्याः सुरसकथया तां रमयितुं
प्रवृत्तोहं प्रेम्णा न तु परहितायात्र किमपि ॥ १५ ॥

मज्जन्तु ये रसविलासजुषोत्र तेपि
ये पापमोहपरितापशमार्थिनश्च ॥
ये चापि मुक्तियुवतीप्रणयप्रवीणाः
सर्वे प्रयाग इव काव्यवरेऽच्युतीये ॥ १६ ॥

अस्ति किल सकलकुलपद्मिनीवदनपद्मसद्मगतकपोलदलभि-
त्तितलकौङ्कुमनवमकरीचित्रविरचनचातुरीधुरीणकरसहस्रः का-

१ गृहारामास्तु निष्कुटाः । २ अच्युतकृते ।

र्तवीर्य[1] इव निखिलध्वान्तव्रातप्रमत्तदन्तावलविध्वंसनपञ्चाननः प्र-
त्नाद्वैतवादीव चक्रचिन्तानन्तसन्तापशान्तिकृतिशीलः शरणाग-
तमुन्यम्बरीष इव सर्वजननयनानुग्रहपटुतरचरणः शमन इव सु-
रालयैकविहितप्रतिदिनविभ्रमः सीरपाणिरिव प्रतापसम्पूरितब्र-
ह्माण्डमण्डलः परशुराम इव यावदाम्नायरूपधाम्नामाधारधुर-
न्धरो विधिरिव गोसहस्रादाननैपुण्यनाशितसमस्ततमस्तोमो या-
ज्ञवल्क्य इव पूर्वाशापरिपूरणनिपुणकिरणश्चिन्तामणिरिव पुष्क-
रैकान्तःसञ्चारस्वभावः समवरुद्धमधुकर इव प्रत्यब्धात्रावलम्ब-
नवशप्रशान्तप्रतापो विश्वामित्र इव अम्बरैकान्तःसंस्कारितमयू-
खः स्वविलासिनीतरल इव पद्मविकासनकनककान्तिविस्तारणच-
णः कुबेर इव नैजप्राभातिकदीधितिरूपाधिष्ठानप्रतिभासितस्वारु-
णवसनभानप्रवर्तितरतान्तसमुत्थितसम्भ्रान्तमनोरमः कौस्तुभ इव
नानाविधांशुकप्रदानसन्मानितपुष्पवतीकः श्रीकृष्ण इव स्वकरो-
त्पादितघनवसुवर्षणपरिपोषितविश्वः कर्ण इव गगनतलोल्लङ्घनैक-
निसर्गः सुपर्ण इव भगवद्वसिष्ठ इव कौशिकद्वेषी धर्मपरिपोषी
च अद्वैतब्रह्मात्मबोध इव निरस्तसमस्ततिमिरः प्रकाशितस्वरूप
प्रकारश्च पतञ्जलिरिव गृहीतार्घ्याञ्जलिः प्रद्योतितगवावलिश्च
हिरण्यगर्भ इव तेजोमात्रतनुः परिमण्डितरत्नसानुश्च श्रीशङ्कर इव
वृषाधिरोहणधुर्यः प्रचण्डवीर्यश्च ब्रह्मसाक्षात्कार इव कोशनिरु-
द्धमधुकरनिर्मोचकः प्रशमितान्ध्यशोचकश्च पार्थसारथिरिव सं-
घटितरथाङ्गमिथुनः कृतकर्णपराक्रमकथनश्च रूपाद्यभिमान इव

१ कार्तवीर्यः सहस्रार्जुनः । २ शरणागतो मुनिदुर्वासा यं एतादृश अम्ब-
रीषराजा । ३ घनवसु द्रव्यातिशयः । घनानां वसु उदकं । वसु तोये धने
मणौ । ४ पक्षिविशेषो विश्वामित्रश्च । ५ गृहीतः अर्घ्याञ्जलौ यः पाणिनिना
पक्षे स्पष्टम् । ६ गावः किरणाः वाण्यश्च ।

मुकुलितकुमुद्वतीकः समपसारितनायकश्च प्रकम्पन इव परिभर्त्सितोडुपः प्रकाशितद्वीपश्च महामोह इव स्वलोकपरिदर्शितानन्तदृश्यमृगजलकल्लोलः प्रत्यूषरञ्जितबालानिचोलश्च पन्नगर्षभ इव सम्पूर्णगोविश्राणनसूत्या(त्था)नसहस्त्रगुः सकलसंयमिवरमानसविकासितगुश्च नारायण इव करपरिलालितमुग्धकमलः प्रशामितघोरतरशमलश्च वासव इव विरचितचारुतामरसोल्लासः सम्पादितद्युनिवासश्च नन्दनन्दन इव भुजङ्गराज इव च सञ्चारितगोसहस्त्रः सुरवर इव करिशेखर इव च पुष्करशालिकरः क्षीरोदकन्याकर इव जीवन्मुक्तवर इव च परिशीलितविष्णुपदः श्रीकान्त इव परमशान्त इव च विरचितानन्तविहारः सकललोकप्रत्यक्कूटस्थ इव काकुस्थ इव च स्वप्रकाशः सर्वजनप्रत्यक्षः श्रीमद्भास्करो नाम त्रय्यात्मा ।

किं च ।

प्रोत्साहः स्वत्रियामाविरहभरपरिम्लायदम्भोजिनीना-
मानन्दश्चारविन्दोदरचरविकलश्रीमिलिन्दावलीनाम् ॥
आघातो घूकपाटच्चरतिमिरचरव्रातरात्रीचरीणां
सन्दोहश्चक्रचक्षुर्हितकरमहसां सोयमाम्नायमूर्तिः ॥ १६ ॥

अपि च ।

यदीयचरणोदये खगसनाथतां रक्षितुं
चरन्ति किमु तच्छिला अपि विचित्रनीराजनम् ॥
स्वजाठरधनञ्जयज्वलदपूर्वकीलैश्चिरं
स एष भगवान्रविर्जयति जाड्यजीर्णज्वरः ॥ १७ ॥

---

१ मुकुलितं आदर्शाङ्कितम् पक्षे मुकुलः पुष्पावबन्धः । २ पन्नगर्षभः पतञ्जली । ३ चारुता–भ्रमर–सोल्लासः । चारु–तामरस–उल्लासः । ४ लक्ष्मीहस्त । ५ विष्णुपदमाकाशम् विष्णोर्नारायणस्य पदं चरणश्च ।

तस्मादेतस्माच्छुरयाप्यगदङ्कारत्वेन गीतभारतीकस्वायम्भुव इव स्मृत्यापि कर्मब्रह्मविद्याप्रवर्तकतयोक्तः सर्वराजन्यजगन्मान्यस्थितिसुरव्रततिदिव्यकन्दः सुपर्वापूर्वशिल्पिनरत्नष्टृनाम्नो विश्वकर्मणः संज्ञाभिधायामुषापराभिधायां स्वधर्मैकपरिणीतायां कन्यायां संव्यवहार इव वासर इव च तमश्चरेतरहितकृतिचतुरः सुमेरुरिव नन्दकत्सरुरिव च हरिकरावलम्बी पद्मालयाशय इव कुशेशयकाय इव च विष्णुपदसेवनशीलः स्थितप्रज्ञ इव दोषज्ञ इव च करकलितयावच्छब्दब्रह्मवैभवः प्रजापतिरिव महायतिरिव च सुमनःसंयमनमननः स्वाधीनपतिकाप्रिय इव स्वाद्वैतब्रह्मबोधविध्वस्तभय इव च सम्पादितात्मरतिः । श्रुत्यन्त इव रत्यन्त इव च निजसुहृगकालिङ्गनयोग्यः श्रीराम इव श्रीकाम इव च प्रतापवशीकृतविश्वम्भरः । कालकूट इव रत्नकूट इव च सम्पूजितशितिकण्ठः केशव इव कुमुदबान्धव इव च सकलकलासम्पूर्णः कोकिल इव पञ्चमचञ्चुरोपि न परभृतः कन्दर्प इवागण्यतारुण्यलावण्योपि न मनःक्षोभकः पावक इव तेजस्विमुख्योपि नाश्रयाशः कुबेर इव राजराजोपि न किंनरेशः सप्तमदिग्गज इव सार्वभौमोपि न धनदाभिमुखः कनकाचल इव भूभृदीश्वरोपि न सुरालयः समुद्र इव परमगम्भीरोपि समर्यादोपि च न जलनिधिः सत्यलोकब्रह्मविभूषितोपि सत्कृतपरमहंसोपि च न विहारितविधिः शृङ्गार इव सुहृगैकसाध्योपि सर्वात्मनोज्ज्वलोपि च न परिणामविसरः सीमन्तिनीसीमन्त इव सुमनःसेवितोपि मुक्ताभिमण्डितोपि च न बालसम्पाद्यः कबरीभार इव सुस्निग्धतरोपि केशसमुच्चय-

---

१ हरिकराः सूर्यकिरणाः हरिकरः सूर्यहस्तः विष्णुहस्तश्च । २ कोकिलः परभृतः पोषितः ।

परोपि च न कुटिलः कटाक्ष इव निषेवितश्रुत्यन्तोपि वशीकृतनिजप्रेयानपि च न मलिनः स्वकीयाधर इव संसेवितद्विजोपि स्वप्रियदत्तामृतोपि च न रागी दम्पत्याश्लेष इव सञ्जनितस्पर्शसुखोपि संयोगसिद्धोपि च न विमर्दितहारः पयोधर इव चारुवृत्तोपि चक्रवर्त्यपि च न कठिनः सुन्दरीमध्य इवानन्तरूपोपि त्रिवलिशाल्यपि च न क्षीणः सांख्यसिन्द्धात इव मानितप्रकृतिरपि निर्लेपपुरुषोपि च नाम्नायान्तविरोधी शबरस्वामीव धर्मैकप्रतिष्ठापकोपि कृतपूर्वकाण्डविचारोपि च न स्ववाक्यवर्णकः पाणिनीयनिबन्ध इव विहितसन्धिविग्रहादिरपि शब्दसाधुताहेतुरपि च न प्रधानीकृतप्रकृतिप्रत्ययः काणादादिराद्धान्त इवानेकतर्कघटितोपि साधितात्मवैभवोपि च नाद्वैतप्रतिकूलः पातञ्जलसमय इव प्रकटितचित्तवृत्तिनिरोधोपि सुघटितधर्ममेघोपि च न यमाद्यवलम्बी चतुर्लक्षणीरहस्यनिर्णय इवाद्वैतमात्रपर्यवसन्नोपि सर्वत्र प्रसक्तोपि च न वेदान्तघटकः कर्ता धर्मसेतूनां भर्ता प्रजानां आहर्ता क्रतूनां संहर्ता विपदां प्रहर्ता शत्रूणां अपहर्ता पापानां धर्ता सर्वविद्यानां श्राद्धदेवापरनामा श्रद्धाधत्रो यमयनुनाग्रजो राजाधिराजोनिखिलहेलिकुलतिलको वैवस्वतमनुवर्मा नाम वार्तमानिकमन्वन्तरेश्वरः सर्वादिग्वधूवदनविधुविशदीकरणविशारदयशःशारदराकासन्ध्यावसरः सकलजगद्गीतचरित्रः परमपवित्रः प्रथितैकातपत्रः पालितक्षत्रः संविहितसत्रः संबभूव सुपुत्रः । स च ।

रथाङ्गयुवदम्पतीरतिहितद्युतीज्यज्जनुः
पुमीप्सितगुणोल्लसन्मणिगणाकरैधत्तनुः ॥

---

१ कर्णः श्रुतिर्वेदाम्नायः ।

महाशुगसुवृष्टिकान्निखिलतापहृत्सद्धनुः
पयोद इव साम्प्रतं जयति सप्तमोसौ मनुः ॥१८॥

तेन तु ।

सर्वार्थसार्थप्रथने समर्थस्तीरे शरय्वाः परमं पवित्रे ॥
यः कोसलः कौशलशालिदेशो योध्याप्ययोध्यानगरी कृतात्र १९

सा च सूर्यकान्वयराजधानीत्वेन द्वादशात्मतामात्मनि प्रकटयन्ती द्वादशलक्षणीव त्रयीधर्मसकलमर्म कलयन्ती द्वादशयोजनमायातापि योजनत्रयं विस्तीर्णापि च सर्वत्र समुल्लसितसज्जनैव रराज ।

या नैजाधिपसूत्रयीव ललितैर्नित्यं त्रिभिर्वेष्टिता
प्राकारैः परिवेषकैरिव दिवि श्रीदैः परारिष्टदैः ॥
तप्यत्काञ्चनपद्मरागविलसन्नीलात्मकैरुन्नतैः
किंवाद्वैतसुखात्मसंविदितिरिव स्थूलादिदेहैरिह ॥ २० ॥

यदीयपरिखावलिच्छलित एव रूपान्तरै-
रुपाययुरिमेत्र या सपदि सप्त रत्नाकराः ॥
अखण्डमभिसेवितुं सकलरत्नगर्भाधिकं
निरीक्ष्य किमु गौरवं सततसौरवंशास्थितेः ॥ २१ ॥

यस्या एव तु गोपुराणि घृणिभिर्माणिक्यजैः सार्थकं
प्रापुर्नाम तथैव योगवशतः स्वर्ग्यागि येषु ध्रुवम् ॥
इन्द्रादेरत्रसन्पुराण्यपि तथा विद्वद्विलासिस्थिते-
र्वाणीनामपि तानितानि ललितान्यासन्निति व्यर्थतः २२

यस्यां हि सौधकलशा भुजगाशयानां
साध्या बभूवुरमिताः किल लीलयैव ॥

१ योधैः सेव्या योध्या । २ अयोध्या योद्धुमनर्हा ।

आसन्सदैव मुदिता वनिताः सपत्नी-
सख्यादिनैव सुदृशः खलु चित्रमेतत् ॥ २३ ॥

किं च ।

प्रासादेषु प्रियेषु स्थिरतरसुरतानन्दहेतुत्वयोगा-
दृज्व्या यष्ट्याःगुणाढ्यास्तडिदभिविलसद्दीप्तयश्चारुतन्व्यः ॥
उच्चैरूर्ध्वं विचेरुश्चिरचपलतरं वैपरीत्यं विनैव
चुम्बन्तश्चन्द्रबिम्बं प्रियतमवदनं वैजयन्त्योद्धुतं तत् ॥ २४ ॥

सुविभक्तचतुष्पथा त्रयी किं किमसौ द्यौर्बहुराजमार्गशोभा ॥
विलसत्सुरमन्दिरेन्दिरा किं किमु वा भूषितपङ्क्तिः प्रियैव २५

सदैव वरतोरणध्वजविराजिसंयोजने
प्रगल्भपुरुषायिते विषमसायकोल्लासिते ॥
तडिन्निभदृढस्थिरप्रविलसच्छतघ्नीरुचिः
प्रमत्तनिजसुन्दरी प्रतिविभाति सेयं पुरी ॥ २६ ॥

अपि च ।

सर्वेपि सदध्वानः सुवर्णसुमनोविचित्रिता यस्याम् ॥
त्रय्यामिव राजन्ते कोपि कदध्वा न कुत्रापि ॥ २७ ॥

भूपितविमदनिकाया दूषितनिजवैभवा गणितमाया ॥
मतिरिव निगमवतीयं सतां मता जयति पूर्युवतिः ॥ २८

वरणोपि रणोद्यतैर्यदीयो भटवर्यैर्विविधायुधप्रवर्णैः ॥
रुरुचे चिरमब्जकर्णिकास्थभ्रमराकारतया विराजमानैः॥२९॥

स्वर्द्वारसम्बध्यररस्वरूपैर्दलैर्विशालैर्दृढरत्ननिर्मितैः ॥
रराज पृथ्व्यानुगलाम्बुजं या कदापि सा जीवति यां विना न यत् ३०

किं च ।

---

१ पताकाः । २ मार्गः पदताडनं च । ३ अध्वा धर्मः मार्गश्च । ४ कपाटम् ।

कपाटकपटेन किं निजसुरासुराऽधर्षणं
प्रबोधयितुमञ्जसा विपुलवज्रमय्यः कलाः ॥
धृताः क्षयचयच्युताः सहदिवा यथा स्पर्द्धया
कलङ्कविकलाः किलप्रकटकीर्तिसच्चन्द्रिकाः ॥२१॥

विप्रैश्चन्द्रशिलामयैः प्रतिनिशं चन्द्रोदये प्रस्रव-
द्वार्भिर्यत्परिखाम्भयः समभवन्सप्तापि वेलाजुषः ॥
किंचैषु प्रतिबिम्बनैरुदभवन्नन्योन्यमुच्चैश्चिरं
चित्रं चारुपुरीशतानि ददृशुस्तान्यप्सरोभिः सुराः॥२२॥

अपि च । यस्यां किल प्राकारान्तराणि सन्ति नानाविधो-
द्यानानि । तथा हि ।

यत्फुल्लारामराजिं निजहृदि कलयन्कल्पवल्लीभिरिन्द्रः
स्वाक्रीडं संवितेने तदपि स शिशुतामेव लोके प्रयातः ॥
तेनाहुर्नन्दनं तं सुरमुनिमनुजाः सर्व एवेति योगो-
ध्यासीत्तेष्वेव तस्मादितरदुपवनं चापि तन्नाम लेभे ॥ २३॥

किं च ।

नानावणिग्जनमहाऽऽपणचित्रिताया
रत्नादिहट्टपटलीशतमण्डिता च ॥
आसीच्चिरं व्यवहरज्जनसन्निनादैः
संनादिता प्रतिदिनं च महोत्सवाढ्या ॥ २४ ॥

स्थलस्थलसमुल्लसद्विविधवारियन्त्रोच्छल-
त्पृषन्निकरवारिदभ्रमविमत्तकेकिस्वनैः ॥
घनीकृतनवाम्यसद्विपुलनाट्यशालानटी-
नटालिपटुकाकलीललितनित्यतौर्यत्रिका ॥ २५ ॥

१ मधुरो ध्वनिः ।

महाविपणिसन्मणिव्रजविकीर्णनानाविध-
प्रभूतकिरणालिभिः सततचित्रिताशानिशम् ॥
सुगन्धिशतवस्तुभिः सुरभिता च सन्धूपिता
रराज नगरीश्वरी जगति योल्लसत्सुन्दरी ॥ ३६ ॥

युग्मम् ।

यद्धीरसौधकिरणैरपरैव गङ्गा
यां पुष्करे व्यरचि तां सुदृशोऽवलोक्य ॥
दिव्या विहाय सरसामपि पूर्वदृष्टां
प्रेम्णा ययुः सपदि नूत्नरसादपूर्वाम् ॥ ३७ ॥

अपि च । यस्यां किल हर्म्यहीरभित्तिषु रत्यागारेषु योषितः स्वनायकान् प्रतिव्यर्थमेव सोपालम्भं ससरम्भं च संभाष्य नवसङ्गमे साध्व्योपि समुत्सुका अपि सततं पराङ्मुखत्वमेव सम्पादयन्ति । क्रीडाकपोतपोताश्चोड्डीयोड्डीय निपतन्ति । कुमाराश्च प्रतिकुमाराभिलाषैः प्रधावन्ति। ततस्ते च ताश्च तत्र यैः कनकपञ्जरविराजमानैः सतारिकैः शुकैः परस्परं प्रतिबिम्बवादोपन्यासविलासमुखेन व्यञ्जनावृत्त्यैव यद्यपि प्रबोध्यन्ते तथापि मौग्ध्याधिक्यादाद्यास्तु स्पार्शनप्रत्यक्षेणैव क्षीणाकाङ्क्षाः क्षणादेव सम्पद्यन्ते। अपरास्तु तत्तन्नायकैः प्रत्युद्गमनं विधाय तत्रैव सरसं सरभसं सविलासं सानुनयं सप्रणयं साभयं च गाढाश्लेषादिपूर्वकमुभयोरपि तथातथा प्रतिबिम्बं तत्रतत्र संदर्श्य प्रसाद्यन्ते । चन्द्रमणिसोपानेषु चन्द्रिकायां स्खलनभिया स्मराशुगरयाकुला अपि कुलाङ्गना(:) समधिरोढुं मूढा एव भवन्ति नवोढाः। तन्मयेष्वेवाट्टकुट्टिमेष्वपि सञ्चारितुं च ।

किं च । यन्मन्दिरचरमभूमिकाक्षौमरत्नः कुट्टिमगतमहेन्द्रनीलमयमञ्चसञ्चरन्तीषु स्वरुचः परितः सङ्किरन्तीषु चञ्चरीकायमानकबरीषु तरुणनरनारीषु सम्पद्यन्ते पद्यावर्तिनां जनानां

सौदामनीभ्रमाः सुराणां चाप्सरोवभासाः सत्यलोकवर्तिहंसानां च विकचमानकनककमलिनीकुलाभासाः । अस्ति च यस्यां सकलशब्दब्रह्म तत्तच्छालासु कीरसारिकाणामपि तत्तदंशे शब्दतदर्थोच्चारविचारचातुरीचमत्कारः किं पुनर्माणवकानाम् । सन्ति च तत्रतत्र यथाभिलषितप्राणिमात्रान्नोदकानवरतदानशालाः शतशः । नानाविधयोधमहायुधगजवाजिशिल्पकल्पकशाला अप्यजस्रं सहस्रम् । बरीभर्ति च यत्र ललनाकुलस्य सौन्दर्यसौभाग्यरूपलावण्यानामनुकरणं सदनपद्मरागस्तम्भस्तम्भिततत्तन्मणिशालभञ्जिकाचक्रं तस्यापि भित्तिविशेषोल्लिखितालेख्यसुन्दरीवृन्दं तस्यापि शृङ्गाटकगततत्तदापणवर्तिमाणिगणश्चेति ।

यस्यां निरीक्ष्य धनिकाधिकरुक्मवृद्धिं
जातः किमेव धनदो[1]पि मनुष्यधर्मा[2] ॥
तत्रापि साऽनधिगतेति ससख्यभक्तया
श्रीशङ्कराङ्घ्रिकमलैकपरायणोस्ति ॥ ३८ ॥

किं च ।

नानाधान्याधिराशीनपि सुरभयतावाटिकानिष्कुटादी-
न्प्रातर्जाग्रद्वधूटीस्तनतटनिकटे चार्वटित्वादिमन्दम् ॥
कस्तूर्यादेर्निषद्यास्वपि बत मरुता यत्र विक्रेतृवर्गाः
सम्भ्राम्यन्ते तदीयक्रयकृतिकुशलाश्चापि चित्रं तदेतत् ३९

निरीक्ष्य किमु यत्सभाः सुरसभा सुधर्माऽभव-
द्यदीयविबुधास्तथा सुमनसो[3]ऽवलोक्याभवन् ॥
सुराः सुमनसस्तथा विबुधनामवन्तोप्यलं
तथापि न कथोद्धुरा इति समागता लेखताम् ॥ ४० ॥

अपि च ।

---

१ कुबेरः । २ मनुष्यत्वयुतः मनुष्य इत्यर्थः । पक्षे कुबेरनाम तद् । ३ सन्तुष्टाः । पक्षे एतन्नामधारिणः ।

नित्यं यत्र मृदङ्गवेणुविलसद्वीणानकादिध्वनि-
र्ज्यानिर्घोषशतैः सह स्फुटतरं संस्पर्द्धते सादरम् ॥
एवं यामिककम्बुदुन्दुभिमहावादित्रचित्रारवाः
केकापञ्चमगुञ्जितैः शिखिपिकालीनां च वाटीजुषाम् ४१

तत्तद्वर्णाश्रमाणामुचितसरणितः पूर्णएवास्ति धर्मो
यस्यां तेनैव सर्वा अपि मृगनयनाः पूरुषाश्चापि सर्वे ॥
सौवर्ण्यं देहवाण्योर्वसनसदनयोरप्यवापुश्च तद्व-
त्ताभिस्तैश्चापि रत्यादिषु किल कलिता ईषदेव श्रमाश्च॥ ४२॥

हृष्टाः पुष्टा अपि च सकला यत्र विप्रादिलोका
अन्नैः पानैरपि च विविधैः पूरिता यज्ञशालाः ॥
धीरैः शूरैरपि च निखिलैरान्तराश्चाथ बाह्या
नष्टाहृष्टाः सपदि रिपवः सन्ततप्रोत्सवाढ्यैः ॥ ४३ ॥

गारुत्मतैकक्ततोरणवेदिकोत्थ-
दूर्वाङ्कुराभकिरणादनलुब्धवत्साः ॥
पाश्चालिकाननसरोरुहसक्तभृङ्गाः
शृङ्गाटकाद्भुतशताः किल यत्प्रतोल्यः ॥ ४४ ॥

यस्याः किल प्रासादशिखरशेमुषीं रत्नसानुरसहमान इव सुरालयो बभूव । यस्यां च धारागारेषु वारियन्त्रानवरतसंसरणसम्पाद्यमाना सारसीकरशिशिरतराहिमकराशिलारचितचन्द्रशालाप्रस्तारितकर्पूररेणुसंपृक्तमौक्तिकमयपयोधिधवलफेनायमानपुण्डरीकदलकुलानल्पतल्पविलुठमानाभिर्वासरमात्राविरहवैश्वान–

---

१ 'पहारेकरी' इति महाराष्ट्रभाषायाम् । २ सौवर्ण्यं सुजातित्वं सुवा' रूपत्वं स्वच्छता सुपीतारिं च । ३ पाश्चालिकाः पुत्तल्यः । ४ मार्गाः । ५ रत्नं सानौ शिखरे यस्य । पक्षे रत्नसानुः मेरुः । ६ सुराणां आलयः देवालयमित्यर्थः पक्षे मेरुपर्वतनाभिव वद ।

रापि रमणीभिर्नैव दूरीकर्तुं पार्यते । यत्र किल महाशालाः श्रोत्रियाः सत्रपदाः सन्तः सन्ततहविर्धूमगन्धेनाधिवासयन्ति त्रिलोकीसीमन्तिनीचिकुर[1]निकुरम्बम् । या च अवतारिष्यमाणानन्तकल्याणगुणमणिगणार्णवायमानमायामयलीलाविलासकलननिजसुजनजीवनैकप्रयोजनयशःकौमुदीवितानान्तःशतकोटिसुविस्तृतपूर्वोत्तररामायणात्मकमहार्षकाव्यदिव्यरत्नरङ्गतलविनर्तितभगवन्महर्षिपुण्डरीकवाल्मीकिनामकसूत्रधारभारतीपटुतरनटीकमुद्रसत्यज्ञानानन्दानन्ताद्वैतकूटस्थप्रत्यगेकरसनित्यशुद्धबुद्धमुक्तभावस्वप्रकाशभूमविभुचिन्मात्रपरब्रह्मपरमात्मश्रीरामोपाध्यायताभिधजीवन्मुक्तिस्वयुवतिसीमन्तालंकृतिहेतुचिन्तामणिश्रेणिलाभमहाहर्म्यहीरकशिखरनिःश्रेणितया भगवता सकलसतीशिरोरत्नीभूतकीर्तिकलारुन्धतीपतिना निखिलब्रह्मनिष्ठव्रातशिखानिघृष्टपादपद्मपीठेन कुशलेशशीर्यमाणशाटिकाकारितशेषसूर्यकार्यकूटेन दण्डमात्रस्थापनखण्डितकुशिककुलदीपकप्रयुक्तब्रह्मास्त्रान्तानन्तास्त्रमण्डलकष्टेन करुणाकटाक्षमात्रप्रचारक्षणजनितानन्तशरणागतान्तेवासिविसर[2]ब्राह्मिष्ठेन त्रयीधर्मधुरन्धरतानुगृहीतासंख्यातशुद्धवैदिकशिष्टेन परमेष्ठिप्रकृतिना श्रीमद्वसिष्ठेन गर्भैकसम्पादितापरोक्षाद्वैतविद्यावैभवश्रीवामदेवप्रभृतिभिरगणितपरमर्षिगणैः सह वसता यामिनीव भगणैः सह हिमधाम्ना कामिनीवाभरणगणैः सह मङ्गलसूत्रदाम्नाऽधिवसताधिभूष्यतेऽनारतम् ।

प्रवृत्तिधर्मैश्च निवृत्तिधर्मैर्या सर्वदा सर्वत एव रेजे ॥
पाणिगृहे बालमृगेक्षणायाः कान्तं प्रति स्वं हृगिवानुरक्ता ॥ ४१ ॥

इत्यच्युतविरचिते श्रीभागीरथीकथाख्ये चम्पूकाव्ये भानुमन्वयोध्याप्रथनाख्यो प्रथमो मनोरथः सम्पूर्णः ॥

---

१ चिकुरस्तरलागयोः पक्षिवृक्षभिदोः केशे गृहबभ्रौ सरीसृपे । इति मेदिनी । २ अन्तेवासि विसरः शिष्यसमूहः ।

अथैतस्यां नगर्यामार्याभिरचितसपर्यः क्वचिदप्यपर्याकुलिततात्पर्यः सकलबाहुजकुलवर्यः सूर्यतनूजः स मनुः श्रद्धाभिधया स्वमुग्धया सह संसाधितगार्हस्थ्यधर्मरत्नसानुः सप्तद्वीपाया अपि रत्नगर्भायाः क्षात्रधर्मधुरन्धरः पुरन्दर इव दिवश्चकार साम्राज्यमीज्यतरमेव निरन्तरम् । तत्र च परचक्रवत्य स्रवन्त्य एव न तु प्रजाः सातिवृष्टयो विरहिणीदृष्टय एव न तु जनपदभूमयः सग्रहा दीक्षिता एव न केपि विषयाः उत्पातो भृग्वागतनिम्नगास्वेव न तु दिक्षु अरिष्टत्वं सूतिकागृहेष्वेव न तु भूतभौतिकेषु राहुदर्शनं ज्योतिःशास्त्र एव न तु पुष्पवन्मण्डले ऋतुवैपरीत्यं नवरजःस्वलास्वेव न तु कास्वपि समासु अतिपवमानत्वमृग्भागेष्वेव न तु केषुचिद्देशेषु कृष्णवर्त्मसञ्चारो गोकुल एव न तु भूतले भूमिकम्पो योगाभ्यासान्तरेष्वेव न तु केष्वपि नीवृत्सु । एवं सत्यलोकस्था इव ब्रह्मैकपरायणाः शैवा इवाकलिताकालकालाः सत्काव्यालापा इव सर्वत्रप्रसादमाधुर्यौजस्वितारम्याः शरा इव परमसरला एवाश्रितसद्गुणा एव न तु परप्राणप्रहारिणः शशिकरा इव चिरतरशिशिरा एव निसर्गगौरा एव न तु रोगिसंक्षोभकाः पद्माकरपीडकाश्च लोका सर्वत्र सन्ततमासन् । किञ्च । तदा परस्परस्पर्द्धा कामिनीकुचयोरेव खलत्वं धान्यशोधनभूमावेव भुजङ्गत्वं सर्पेष्वेव व्यभिचारो हेत्वाभासविशेष एव स्तैन्यं श्रीकृष्णकैशोर एव हिंसा क्षात्रधर्मशास्त्रेष्वेव अशान्तिः सुरतकालिकनवमृगाक्षीमनस्येव अनार्जवं कामिनीभ्रूचिकुरलोचनाञ्चलप्रचारवल्लरीधनुरादिष्वेवासीत् । अपिच ।

---

१ नद्यः । २ भृगुः पर्वततटः । ३ अग्निश्चन्द्रश्च । ४ तारागणसमूहे । ५ देशेषु ।

अकृष्टपच्यौषधितैव तत्र फलानि पुष्पाणि च सर्वदा स्युः ॥
आध्यात्मिकाद्यापदणूदयोपि प्रजासु नैवास कदापि राज्ये ॥१॥

अथ निजवयःपाके श्रद्धावधूः श्रुतिसङ्गमं
दृशि जनयितुं भूयस्तस्याः समीपमिमां शनैः ॥
अनयदमलं स्मेरोद्भूतद्विजेशरुचिः क्षणान् -
मधुरिमधुरं वाग्व्यापारेप्यलं सुधयेप्सितम् ॥ २ ॥

स च तस्यामद्वैताब्धप्रबोधमिवेक्ष्वाकुनामानमखिलांशैरप्यात्मसमानमेवात्मजन्मानं निर्माय ततो यावदुचितपरिणयान्तसंस्कारसंस्कृताय सर्वविद्याकल्पलताहृद्यतमोद्यानायमधृतमहाक्षात्रधर्मधुरीणवीरव्राताय महाभिषेकविधानालोकालोकाचलमेखलाया अपि पृथ्व्याः साम्राज्यमखिलप्रजेज्याय तस्मै प्रादात् ।

इक्ष्वाकुःसोथ तस्यां पुरि समधिवसन्नेव नैजैः प्रतापैरौदार्याद्यैर्यशोभिर्भुवमपि निखिलां पालयामास धर्मैः ॥
विष्णुं वैकुण्ठनाम्न्यामिव पुरि निवसन्नेव सर्वा त्रिलोकीं
तस्मादैवाकरीयं समधिगमदलं वंशवल्लीसमृद्धिम् ॥ ३ ॥

तस्यां चैतस्यां तपनसन्तानकल्पलतायां कश्चित्साकेताभिधायोध्याधिराजएव सगराभिधः पूर्ववत्सार्वभौमो बभूव । तेन सर्वविद्यासम्पन्नेन विधिना केशिनीनाम्नी वैदर्भदुहिता सकलवधूदिव्यलक्षणयुता तथा तावदरिष्टनेमिसंज्ञनरपतिसुता सुपर्णसोदरी सुमतिरिति यथार्थनामामृतझरी सर्वगुणसुन्दरी कनिष्ठवनिता चेति भार्याद्वयं क्रमेण परिणीय बहुतरकालातिक्रमेण पुत्रमलभमानेन भक्तिविरक्तिभ्यां सह प्रबोधेनेव निरोधसमाधेरिव हिमवतः पृष्ठे सप्तमभूमिकानन्दमिव भगवन्तं भृगुसंज्ञकं विष्णुवक्षः कृतस्वपदलाञ्छनं महामुनिं साक्षात्कर्तुं शतवर्षपर्यन्तं तपः समकारि । ततः परमसन्तुष्टो भगवान्भृगुस्तस्मै तवैका

भार्या वंशकरं पुत्रं जनयिष्यत्यन्या तु षष्टिसहस्रपुत्रान्महाबलपराक्रमचित्रानिति वरं प्रादात् । तेन तत्पत्न्यौ का वाऽवयोः कथं कथं प्रसूयादिति निर्णयस्तु श्रीमदेकचरणायत्त इत्यतिविनीते स्वान्तःसंदेहसंदोहकामनया तं मुनिपुङ्गव सम्प्रार्थ्य नैसर्गिकसदयत्वेपि प्रकृतशतवार्षिकतपःक्लान्तातुलप्रणतसंदिहानराजपुत्रीद्वयसंयाचनदैन्यदर्शनतः शिशिराकिरणस्य प्राकृतिकालौकिकशुक्लत्वेपि शरद्राकोभयकर्तृकोदयानुकूल्येनाभिनवप्रसादवत्तस्य यथेच्छमित्यनुपमाच्छे सञ्जायमाने प्रेमोत्तरकल्पतरुकुसुमगुच्छे ज्येष्ठपत्नी केशिनी तावदेकमेव वंशकर्तारं कुमारं स्वीचक्रे । कनिष्ठपत्नी सुमतिनाम्नी सुपर्णभगिनी तु परितोषात्षष्टिसहस्रसंख्याकान्महाबलोत्साहकीर्तिकानेव पृथुकानुररीचकार । ततस्तु ।

सम्पूर्णकामः सहधर्मिणीभ्यां सहाययौ हैमगिरेरयोध्याम् ॥
चन्द्रोपलाच्छुद्धचभिमाधुरीभ्यां निम्नस्थलीं सायमिवामृतौघः॥ ४॥

अथ कालेन ।

असमञ्जसमेव केशिनी सुषुवे वंशकरं कुमारकम् ॥
स युवाम्भसि निक्षिपन्प्रजा इति राजा वन एनमत्यजत्॥५॥

तथा हि ।

ममत्वं मानवे वंशे क धर्मपरिपन्थिषु ॥
ये तथा ते तु लोकेस्मिन्दानवा मानवाह्वयाः ॥ ६ ॥

सुमतिः सुषुवे सुतुम्बकं कृमिवत्षष्टिसहस्रबालकाः ॥
अभवन् घृतकुम्भगास्ततो बहुयत्नैरुपमातृवर्द्धिताः ॥७॥

कालेन ते यौवनशालिनः स्युर्महाबला भूरिपराक्रमाश्च ॥

---

१ जनयिष्यतीत्यनुवर्तते । २ बालकान् । ३ धर्मशत्रुषु अधार्मिष्वित्यर्थः ।

ज्ञात्वेति राजा स नरोधिकारं यज्ञैरयष्टैष तथाश्वमेधैः ॥८॥

अथास्यैकस्मिन्नश्वमेधे हरिहयस्तावद्यज्ञीयं हयं गूढरूपेण रक्षोद्वाराऽपहार्य पाताले पुरा सुरकार्यं निशाचरनिचयनिर्दलनलक्षणमसङ्ख्यातविभावरीजागरैः समासाद्य श्रान्त्या योगनिद्रावलम्बनेन निद्राणस्य भगवतः कपिलरूपिणः श्रीविष्णोः शिरोभ्यर्णमबन्धयत् ।[1] ततस्ते षष्टिसहस्रतत्पुत्रास्तच्छोधनार्थं भूमण्डलमखिलमपि निपीड्य परिखाकारेण तत्र तत्र सप्तधा खनन्तोप्यश्वमलभमाना एव तत्रैवाधो विवरविशेषं सम्पाद्य तेन पाताले गत्वा तत्रोक्तस्थले तमश्वमुपलभ्यायमेवास्माकं हयंपहर्तेति तमवाच्यवादैः पादैरायुधभेदैश्च भूयः प्रहरन्तः सर्वेपि व्युत्थितस्य तस्य क्षणादेव लोचनोत्थितवीतिहोत्रेण पुष्पपत्रिगात्रमेव भस्मतामेवापुः । युक्तमेवैतत् । यतः ।

यौवनमथातुलं धनमज्ञानं प्रभवनं च यस्यासौ ॥
कपिरपि निपीतमदिरो वृश्चिकदष्टो महाग्रहग्रस्तः ॥९॥

अथ बहुतरातिथे कालेऽतीते दीक्षितः सऋत्विङ्किरः समन्त्रिप्रवरः स राजा सगरः किमित्यद्यापि यज्ञीयहयान्वेषिणां षष्टिसहस्रतनयानामन्यतमोपि न परावर्तत इति चिन्तानितान्तव्याकुलस्वान्तस्तावदकस्मादागतेन भगवता देवर्षिवन्दितपादेन श्रीनारदेन यथावृत्तं प्रतिबोधितस्तेन परमवैक्लव्यविह्वलमनाः किमप्युपायान्तरमसम्भावयमानः स्वविवेकेन धीरतामाधाय सोपाध्यायैरमात्यैः सह संमन्त्र्यासमञ्जःपुत्रमखिलपौरजानपदजनसंमतचारित्रपरमपवित्रं सुन्दरसुकुमारतरगात्रं स्वधर्मसंरक्षितक्षात्रं नाम्नांशुमन्तं प्रतापतोपि तथैव सन्तं नूत्नवयःकान्तं स-

१ मदनशरीरमिव ।

द्यः समाहूय तत्पितृव्यनिरुक्तस्वसुतसंस्थासम्पादनभगवत्कपिलप्रसादनयज्ञीयाश्वोपादानार्थं ससेनासार्थं पातालस्थलं प्रति सम्प्रेषयामास। सोपि च तत्र गत्वा निरुक्तपितृव्यभस्मराशिं भगवन्तं कपिलमहामुनिं च तुरङ्गं दृष्ट्वा तेषां जलाञ्जलिप्रदानार्थं तत्र किञ्चिज्जलाशयं समुपेत्य तत्र यथाविध्यवगाहनादिपूर्वकं पितॄन्संतर्प्य यदृच्छयानिरुक्तजलाशयतटनिकटवर्तिनं स्वपितॄणां मातुलं सुपर्णमवलोक्य भो बाल नह्यनेन जलाञ्जलिनैतेषां ब्रह्मशापाग्निदग्धानामुद्धरणं किं तु हिमवतो ज्येष्ठा कन्या निखिलजगन्माया च या भगवती गङ्गास्ति तया विश्वपाविन्या यदि चेदयमेतद्भस्मराशिराप्लाव्येत तदा सद्य एवैते षष्टिसहस्राण्यपि ते पितरः शक्रलोकभाक्त्क्रमिष्यन्तीति तेन समुपदिष्टोपायः सन् भगवन्तं कपिलमपि प्रणामाद्यैः सद्यः प्रसाद्य तयोराज्ञया तं यज्ञीयं हयमादायायोध्यामुपगत्य यथावृत्तकथं सविनयपथं पितामहाय हयं यज्ञीयं न्यवेदयत् ।

अथ स सगरः कृत्वा पूर्णं मखं बहुखिन्नधी-
रनधिगमतो लोके गङ्गावतारणकारिणः ॥
कथमपि महो यस्यापि........स्वचेतसि चिन्तनै-
रिति कृतिमतं राज्यं कृत्वा चिरेण दिवं ययौ ॥ ११ ॥

सगरे तु दिवंगते तदीयं बत नप्तारमिहांशुमन्तमेव ॥
व्यदधुः सकलाः प्रजाः प्रजेशं गुणराशिं च महौजसं सतोषम् १२

गङ्गावतारणविधाविह सोप्युपायं
चित्तेऽनवाप्य निजधर्मपथेन राज्यम् ॥
कृत्वा दिलीपमभिषिच्य सुतं स तत्र
गत्वा तपोवनमथो तपसागमत्स्वः ॥ १३ ॥

एवं दिलीपोपि भगीरथे सुते महारथत्वेन निधाय राज्यम् ॥

मङ्गाऽयुपासाकलनात्तपोभिः स्वर्गं ययौ कालवशाच्चिराय ॥१४॥
अथ भगीरथ आत्मनि सत्पथं स्ववितथं प्रविचिन्त्ययथा यथम्॥
मनुरभिध्वनितोपि च नीतितो वसुमतीं सुमतिः समपालयत् १५
इत्युच्युतविरचिते श्रीभागीरथीकथाख्ये चम्पूकाव्ये मनुराज्यादिसगरादिभगीरथान्ततदन्वयप्रथात्मा द्वितीयो मनोरथः॥२॥

—०:०—

## तृतीयमनोरथः ।

एवं भगीरथनृपे तिलके पृथिव्याः
सम्पालयत्यविरतं सुतवत्प्रजौघम् ॥
तस्य प्रसन्नमुखशारदपूर्णचन्द्रा
च्चिन्तामणेरिव हितं द्रुतमर्थिपङ्क्तेः ॥ १ ॥

तत्रापि ।

पात्रेष्वेव वसूनि वर्षति यथा धाराम्बुवर्षोच्छ्रयः
सद्धर्मागतमाददाति तृणमप्याराद्गजास्योपमः ॥
वज्रं दुर्जनमानसं स्वविलसत्षाड्गुण्यमन्त्रेण यो
वज्रेणैव भिनत्ति वज्रधरवत्तत्रापि योक्तुं गुणान् ॥२॥

किञ्च ।

तरणिरिव तमांसि यो भिनत्ति
ज्वलति द्वेषणकानने यथाग्निः ॥
शशिमणिरिव सन्द्रवत्यखण्डं
द्विजराजोदयमाप्य शुद्धभावात् ॥ ३ ॥

तस्य च मदनमृगेन्द्रमहावने नानाविधकामिनीविलासहाससाधने तृतीयपुरुषार्थरत्नक्रयणनिपुणसुदृढधने विषयपञ्चकास्वादनपुष्पकविमाने सौन्दर्यपरमार्थनरयाने रतिकुलदेवतासि-

हासने ऐहिकानन्दशरदिन्दुगगने वात्स्यायनराद्धान्तमहावचने वैषयिकसुखाशावल्लीप्रताने यावदुपभोगनिदाने जीवमहाविलासे विलासकनकसदने सद्यःसमुन्मादितमदने यौवने वर्तमानस्यापि सार्वभौमस्यापि सर्वसद्गुणमणिगणाकरस्यापि विधिवत्परिणीतसुन्दरतरदारस्यापि सर्वसौन्दर्यसम्पन्नस्यापि दृढतरशरीरस्यापि निखिलानवद्यविद्यानिलयस्यापि यावज्जीवघटीयन्त्रावलीमिमां स्वमत्यामेवात्यादरतो नित्यानित्यादिकृत्याकृत्यादिचेत्याचेत्यादिगत्यागत्यादिरीत्या विचारयतः स्ववर्णाश्रमधर्मानुष्ठानचारुकर्षिते भगवदनुभावप्रेमामृतवर्षणस्निग्धीकृते सदसद्विचारशालिदिव्यबीजावापललिते चित्ते सुन्दरकेदार इव सरसतरः सर्वत्र विरागाङ्कुरः किल यदृच्छयैवाविरासीत् । उचितमेवैतत् ।

ये सत्सङ्गसुशास्त्रसेवनरताः शान्ताः स्ववर्णाश्रम-
प्राप्ताचारपदेशभक्तिभरितास्तेषां विरागो न चेत् ॥
ध्वान्तं भानुशतं तृणं च शिखिनं कीटस्तथाधूर्जटिं
काकः केकिकुलं शशोपि शरभं निर्भर्त्सयेत्किं न तत् ४

अहो विचित्रैवास्य तु दिष्टेष्टपुष्टिरेव । यदयं निरुक्तदशायामपि विरक्तोभूत् । दृष्टं चैतद्गर्भादावेव भगवद्वामदेवादेः ॥ तथाहि ।

साधकसहस्रसत्त्वे बाधकमेकं बलिप्रदीपसमम् ॥
रज्जुभुजङ्गे दृष्टं तद्वद्दृष्टं न किं कुर्यात् ॥ ५ ॥

अपिच ।

यस्य स्पष्टं न च किसलयं नो लतानां वितानं

---

१ उत्तमक्षेत्रेइव ।

नाम्भःसेको न च वृतिकृतिर्नाङ्कुरो नालवालम् ॥
अन्तःकन्दाज्झटिति कुसुमं तस्य भूचम्पकस्य
प्रादुर्भूतं सुरभयति किं नैव लोकं समस्तम् ॥ ६ ॥

स चैवमेकान्ते निजस्वान्त एव समचिन्तयत् ।

पुनरपि रजनीदिनं पुनर्मे कृतमेवानुविधेयमेति कर्म ॥
बहुतरविरसास्त एव भावाः पशुरोमन्थवदेव हा जनानाम् ॥ ७ ॥
शिवशिव विलयं प्रयाति नित्यं निखिलं रम्यमपीह वस्तुजातम् ॥
न लवोऽपि गतोऽभ्युपैति पश्चादसुरारेरपि चायुषोऽत्र केऽन्ये ॥ ८ ॥

पूर्वेद्युः किल सरसं मयोपभुक्ता
या रामाशुचिरपि चारुताभ्रमेण ॥
सैवेयं पुनरपि भोग्यतामुपैति
व्यामोहान्मदनपिशाचजान्मुधैव ॥ ९ ॥
अन्या चेदपि परकीयतावशेन
निन्दादीतरदधिकं किमस्ति तस्याम् ॥
स्वीयाचेदपि च तथापि को विशेषो
रोमन्थाचरणमुदेव तच्छरण्या ॥ १० ॥

ननु रूपगुणलावण्यतारतम्यं त्वनुभूय त एव तत्कथं सामान्यतः सर्वत्र निर्विशेषावगतिरिति उच्यते ।

रुपादेस्तारतम्यं भवतु मृगदृशां को विशेषस्तथापि
त्वङ्मांसासृक्कफादेः किमपरमधिकं दृश्यते स्थूलदेहे ॥
प्रत्यक्षं पूतिगन्धिप्रतिदिनमनघैः स्नानशौचानुलेपै-
र्बाह्यैरेवोपचारैः शुचिरिव फलिता कामुकैः सुन्दरीव ॥ ११ ॥

---

1 इन्द्रस्यापि ।

केशाः सरोरुहदृशां यदि भानुकन्या-
भङ्गाः प्रसाधनमृते तृणवत्कथं ते ॥
भल्लूकतां स्फुटतरां जनयन्ति तासु
ते मार्जनादिविरहेऽतुल्पूतिगन्धिम् ॥ १२ ॥
भालं शशाङ्कशकलं यदि चेत्तरुण्याः
प्रेक्ष्यं कुतो न तिलकेन विनापि तत्स्यात् ॥
एवं भ्रुवावपि मुधा धनुषी स्मरस्य
तारुण्यमात्रविगमे तृणवद्यतस्ते ॥ १३ ॥
दृशौ मृगदृशौ यदि क्रकचलोलदिन्दीवरे
स्मरेषु रचितादरे नवचकोरमीनज्वरे ॥
तिरोरचितखञ्जनव्रजविराजशोभाभरे
कुतः खलु न ते ऋते तरुणतां तथा दृश्यतः ॥ १४ ॥
कपोलौ कान्तायाः कनकमुकुरत्वं यदि गतौ
कुतस्तर्ह्येतौ स्तः परवयसि भूर्जत्वगुपमौ ॥
तथैतस्याः स्मेरो द्विजवरमरीच्यङ्कुरवरो
यदि स्यात्तत्कस्माद्भवति तृणवत्तत्परिणती ॥ १५ ॥
शरदिन्दुरविन्दसुन्दरं यदि चेदुन्मदसुन्दरीमुखम् ॥
सहसैव कथं जरोदये तृणतां खर्परतां च यात्यदः ॥१६॥
यदि रवो मधुरः सरसं वचोप्यमृततश्च पिकादिकलादपि ॥
किमिति तर्हि वयोतिगतिक्षणे नतदृशां रुचये हितकार्यसौ १७
वक्षोजौ चक्रवाकौ कनकमयमहाकल्पवल्लीफले वा
कुम्भौ स्वर्दन्तिनो वा कनककमलिनीकोरकौ वा तदद्री ॥
गुच्छौ वा कन्दुकौ वा विकचसुमनसां तप्तहेम्नो घटौ वा
स्यातां पातित्यकाले कुत इह वृषणौ प्रेतवाहद्विषस्तौ ॥१८॥

कामिन्या यदि भुजयोः सुवर्णपद्म-
नालत्वं किमिति जरोदये तृणत्वम् ॥
आरक्ताम्बुजयुगता तदीयपाण्यो-
रप्यङ्गुल्युपगमशोकपल्लवत्वम् ॥ १९ ॥

मध्यो मनोरमायाः काञ्चनसोपानतां गतः कस्मात् ॥
पतितोरोरुहवसतिर्भवति गते यौवने धिक्तत् ॥ २० ॥

जघनं नवकाञ्चनाघनं विपुलत्वादिगुणेन मानद ॥
तरुणैकदशैव पोषितां मलमूत्राशयमप्यलं किल ॥ २१ ॥

ऊरू देवपतिद्विपस्य करतां सद्रुक्मरम्भात्मतां
संप्राप्तौ करभत्वमप्यनुदिनं सीमन्तिनीनां यदि ॥
तत्तारुण्यविराम एव भवतस्तौ शुष्ककाष्ठोपमौ
कस्मात्काञ्चनचक्रतामुपगतावेवं नितम्बावपि ॥ २२ ॥

जङ्घे सुदत्या यदि हेमरम्भास्तम्भान्तरङ्गायितकाण्डशौण्डे ॥
वार्धक्ययोगे भवतः कथं ते सुजीर्णवेणोः शकलायमाने ॥२३॥

हंसहस्तिगतिके वधूपदे पद्मतां यदि गते मते रतेः ॥
तर्हि यौवनमृते कुतस्तयोर्भेकतुल्यगतिमत्त्वमावभौ ॥ २४ ॥

कुचेतराङ्गानि शिरीषशोभासम्भारभाज्येव यदि स्त्रियाश्चेत् ॥
लोष्ठायमानानि जरद्दशायां भवन्ति कस्मादिह तर्हि तानि॥२५॥

तडिदेव लतेववास्ति हैमी यदि वा जङ्गमपद्मिनी किलेयम् ॥
तरुणी हरिणीक्षणापि वृद्धा किमितीद्धा पलितैश्च धिग्वलीभिः२६

आस्तामेवं मानुषीणां विचारो दिव्यस्त्रीणां त्वेष दोषो न दृष्टाः ॥
तद्देहानां नैजसत्त्वाच्चतस्ताः पुण्यैः साध्याः स[illegible]तत्त्वादिजन्यैः२७

यद्वादरूपकृतिनन्यमत्र विनश्वरं सस्यसमस्तदेवम् ॥
व्याप्ते सुरस्त्रीष्वपि पुण्यजत्वाद्विनाशतैवेति सुखान्तराम्यः॥२८॥

किं च युक्त्यन्तरमपि । यावद्दिव्यनव्यवरवर्णिन्युपभोगभाग्य-
स्य भङ्गुरत्वभ्रामिकत्वायापादने स्पष्टतरमेव विचारचञ्चुराणाम् ।

अन्नादेरशितात्[1] उदेति वपुषि प्रायेण शुक्रं शनै-
स्तेजोंशाधिकतावशेन पुरुषान्सन्तापयत्येव तत् ॥
तेनैतस्य विमोक्षणाय विकलाः संयान्ति ते कामिनीः
सिक्ता तास्वथ यान्ति शान्तिसुखितां प्राचीनसंस्कारतः २९

न्यायोयमेव बत योषिति योजनीयो
धातुद्वयं मिलनतः शिशिरत्वमाप्य ॥
नैतां दहन्त्यथ घनं यदि चेत्स गर्भी
नो चेत्पतत्युत विजीर्यत एव तत्र ॥ ३० ॥

तस्मात्सुरस्त्रीष्वपि को विशेषः खरी[2] च नारी च सुरी समैव ॥
पुंसोन्त्यधातूत्पतनेन शान्तौ साजात्यमुद्दीपकमेव तत्र ॥ ३१ ॥

रूपालङ्कारपुष्टिप्रभृतिषु सकलेष्विष्टवस्तुष्वजस्रं
प्रोक्तान्तस्तापशान्त्युत्तरतृडुपरमाच्चेतसोऽन्तर्मुखत्वे ॥
आदर्शादाविवात्माद्वयगसुखलवस्यापि सम्बिम्बनेन
स्वानन्दे व्यज्यमाने भ्रमभरकलितं कारणत्वं विमूढैः ३२

तस्माच्छ्वाऽस्थि[3] यथा मुहुः कवलयन्वक्त्रासृजैवं भ्रमात्त-
त्सम्बन्धितया मतेन तु सुखी दुःखी च पश्चात्तथा ॥
संस्काराच्छुभशब्दमुख्यविषयानिच्छंस्तदाप्त्या क्षणं
तद्वाञ्छाशमतः सुखीति सुखदः सास्मान्न तु स्त्र्यादयः ३३

तदिह निखिलवाञ्छाशान्तिरेवास्ति येषा-
मभिमतविषयाणां लाभयोगं विनैव ॥
प्रबलतरविवेकेनैव सौख्यं तु तेषां
प्रतिपदमपि नित्याद्वैतसाम्राज्यजन्यम् ॥ ३४ ॥

---

१ अशितात् भक्षितात् । २ गर्दभी । ३ कुररः । ४ मुखरक्तेन ।

एवं च लोके तदर्थमेव यत्नः संततमनुचिन्तनपूर्वकं पुरुषार्थकामेन भूरितरं करणीयो यत्प्राप्त्या न किंचित्प्राप्यमवशिष्यते तदपरं तु व्यापारजातं तुषपेषणाय मानमेव प्रत्युत प्रागुक्तसारमेयनिदर्शनेन दुःखमहाहिदर्शनायैव । यद्यपि प्रायः सर्वोऽपि मूढबुद्धिर्जनः पुनःपुनः पर्युषितमेव नवयोषिदादिसमास्वादनव्यापारजातं लौकिकं पारत्रिकताद्दग्विषयविशेषैकफलकं ज्योतिष्टोमादिकं शास्त्रीयं च कर्म करोत्येव ततः सुखाद्यपि भुनक्त्येवाथापि प्राज्ञश्चेत्को वैताद्दक्कुर्यात् । न हि बहवः पतङ्गाः प्रदीपे पतन्त्येवेति गगनतलमहेन्द्रनीलरत्नागारप्रदीपेन पतङ्गान्तरेणापि तथैव निपतितुमुचितम् । एवं सञ्जातान्तश्चिन्तयात्यन्तसंसृतिभीतिसंत्रस्तस्वान्तोऽसावपवारितनिखिलानुचरनिकरः शरयूतीरविकल्पितस्वैरविहार इव प्रत्यग्रवयोङ्कुर एव संपन्नविरागभरगूहनचतुरतया भास्करकुलाचार्यमप्यपरचतुराननचातुर्यमपि सकलभृगुमरीच्यादिब्रह्मिष्ठवर्यमपि भगवन्तं वसिष्ठं स्वाभीष्टं प्रत्यपृष्ट्वैव कृतनित्यमाध्याह्निकक्रियः स्वानन्दसिद्ध्युन्मुखमनोरथः स भगीरथः किञ्चित्तदुचितफलपुष्पाद्युपचारकरः प्रकृततीरपरिसर एव भगवति भास्वति[1] सकलभुवनाभोगलक्ष्मीनाभिस्थलं तरलइव[2] नभस्तलमध्यस्थलमवलम्बति प्रकृतिपुरुषयोरिव कोकयो[3]रैक्यमाशासति यावत्पद्मिनीवृन्देऽपि स्वप्रेयःसांमुख्यसम्पादनेन निःसारितहार्दनिखिलमकरन्दे स्वगुणसमर्पणपरितर्पितागणितहंसमानसकन्दे स्वरसप्रदानसंमोदितनिश्चलामन्दामिलिन्दे भविष्यद्भगवत्सद्गुरुवरप्रसाद इव सकलतमोवसादनमूत्थानतया सर्वजगति व्याप्ते भानुमनुदयोते । भविष्यच्छिष्यबुद्धिवैधध्वननार्थमिव स्वसम्प-

---

१ सूर्ये । २ हारमध्यमणिरिव । ३ चक्रवाकयोः ।

कानिःसारितविमलाकोपलान्तरानलज्वालावलीनीराजितराजीव-सिंहासनविराजमानराजहंसपोते भविष्यन्मायासङ्कोचसूचनयेव निखिलशाखिच्छायामण्डले व्यापकप्रकाशभीत्येव सर्वत्र कांदिशीकतयैव सद्यःसमुपसृततत्पादतले च सति समनुवृत्तलोक-दृष्टिकल्पितदक्षिणावृतभ्रामितकुलालचक्रनिदर्शितसंस्कारव्रात-विरचिततात्कालिकैकोचितचारुनित्यकर्मसम्पादितलोकसङ्ग्रहानु-ग्रहकुलं शिवमिव भस्मोद्धूलनविमलं विधिमिव परिहितप्रावृत-सितवसनधृतावदातयज्ञोपवीतं रुद्राक्षवलयकुशपट्काधिष्ठित-कुशासनकुरङ्गाजिनावलम्बिनकमण्डलुजलं हरिमिव समनुसन्धि-तहृत्कमलं ध्रुवमिव स्वप्रभावैकमण्डितसकलमुनिमण्डलं च-न्द्रमिव सबाह्याभ्यन्तरशीतलं रविमिव मूर्तिमत्रयीमात्रपरिणम-त्किरणचक्रवालं हेरम्बमिव बुद्धिप्रसाधनविलोलं पतञ्जलिमिव योगसंवार्चितचरणतलं वसिष्ठमिव ब्रह्मनिष्ठकुलसम्प्रार्थितशीलं बादरायणमिव श्रुत्यन्तविचारानिरस्तान्तर्मलं गौतममिवास्तिकत-र्ककुशलं कपिलमिव विवेकव्यूहसंगृहीतकलं भगवन्तं वितलं नाम महामुनिं यथाविध्यभिवादनपूर्वकं कायिकादित्रिविधनम्रीभावै-रनन्यान्तेवासितया समुपससाद ।

ततः स पप्रच्छ नतस्तद्वीक्षणात्प्रसन्नचित्तश्च भवाग्नितप्तः ॥
स्तुत्वा हितं तं मृदुसुप्रलापैः शिखी सुकेकाभिरिवामृतप्रदम् ३९

आयि भगवन्निजकरुणापाङ्गतरङ्गरिङ्गणैकशिशिरीकृतानन्ता-न्तेवासिवासनासंसारपरो (प) भोगमोक्षादियावदभिवाञ्छितपरि-पूरणनिपुणवेदनन्दनवनकल्पतरो यावच्छब्दब्रह्मनैपुण्यागण्यगुणै-कसम्प्राप्यभारतीभरसुरतरङ्गिणीभङ्गभङ्गप्रदप्रोत्तुङ्गमङ्गलसुललि-

१ लहरी भेदश्च ।

तविस्तरपरिनिरस्तसुरगुरो बुभुत्सुडिम्भमुखनिहितमातृतुल्यलघुतर-कवलरचनपुरःसर तरविचारपरिपाकपरिनिःसरदखण्डाद्वैत सच्चिदानन्दसकलद्वैतेन्द्रजालवल्लीमहाकन्दाधिष्ठानीभूतकूटस्थब्रह्मात्म्यैक्यविशुद्धाप्रतिबद्धसाक्षात्कारसकाश्मीरशार्करचारुचरो श्रीमत्सद्गुरो एतासु महामायाऽनव(रं)तान्धकारपरिपूरितासु पञ्चशरपञ्चास्यघोरतरगर्जनश्रवणक्षणप्रस्त्रवद्गुपरतिहस्तिनीविज्ञानगर्भासु क्रोधमदान्धसिन्धुरसहस्रसमुन्मूलितविवेककनकचम्पकनिचयासु लोभप्रबलभल्लककोटिघनघुर्घुरध्वनिभीषणासु मोहमहास्फुरदहीन्द्रवृन्दविषफूत्कारवैश्वानरप्रज्वलद्धैर्यहरिचन्दकदम्बकासु मदसदोद्दामदावानलनिर्मूलदह्यमानात्मविनिग्रहमन्दारनिकुरम्बासु मत्सरदुर्धरव्याघ्रसहस्रासङ्कुलमानसानिकुञ्जासु दम्भसैरिभशतसमुत्कर्दमितस्वधर्मकासारासु दर्पमहासर्पसंरुद्धशान्तिपद्धतिविकलसकलजन्तुसन्तानासु अभिमानमत्तस्तब्धरोमयूथसमुत्खातहिताहितविवेचनसुमनःसंफुल्लवल्लीषु पारुष्यतरक्षुसंभक्षितदीनजनहरिणनिवहासु अज्ञानानन्तदुर्यागदुस्तरासु कोशपञ्चकमहाकुहरदुर्द्धरासु धर्माधर्मासंख्यातनीचोच्चदेशदुर्गमासु अगणितसुखदुःखदुर्गदरीश्रेणीव्याकुलतरानन्तजीवपान्थपरंपरासु रागद्वेषमहाशैलसंकुलसकलभूतलमार्गसंखिन्नपथिकनरवरयूथासु शोकसंमोहमहाध्वान्ताधिकृतमतिमात्रसम्भावितवीतिहोत्र[1]कान्तिव्रातासु आधिव्याधिदुर्धुनीप्रवाहव्याकुलीकृतसद्वासनामहौषधीप्रतातिसंवलिताचिन्तानन्तग्राहगिलितनिमज्जितागाधस्थलनीतसङ्कल्पविकल्पावर्तभ्रामितापरिमितमुग्धचेतनाध्वगासु आशामहासाल[2]सञ्छादिताविवेकालोकसञ्चारौपयिकान्तःकरणगगनासु तृष्णाग्रीष्मोष्णाङ्गारसर-

१ अग्निः । २ महान् वृक्षः ।

णिसंदग्धाध्वकसंघासु अनुरागपूगागणितकण्टकिकुटकुटिलकोटि-पारिपाटितधार्मिककूटासु सांवर्तिकधारायमाणमरणभयसततवर्षण-पारत्रिकशोकशङ्कास्फूर्जथुप्रतिध्वानितदिगतकन्दरासु कुटिलजरा-मृत्युसन्तापसन्तापितस्मृतिपङ्क्तिभ्रष्टसश्वरज्ञानपदजनपदासु यौवन-महाभयनिदानस्मरतस्करनिकरनिधानघोरतरवनावलिकालायमा-नासु तरुणीसामान्यविधवन्याविमूर्च्छितानन्तजन्तुस्तोमासु अनल्प-कल्पनानिबिडतमनिच्छिद्रसान्द्रवनस्पतिवानस्पत्यवीरुत्सहस्रासु शब्दस्पर्शरसरूपगन्धव्याधसंबाधसंबाधितजीवजन्मान्धवृन्दवीथि षु नानाविधगीतवाद्यनृत्यालङ्कारोपवनविहारविचित्रवसनवेषालेख्य मुकुरमन्दिरसुरभितरमाल्यकाश्मीरकस्तूरीहरिचन्दनपाटीरपङ्का-द्यालेपनषड्रसान्नभोजनसलीलसुरभितरशीतलमधुरसलिलपानपुष्पो-दकप्रोक्षितोशीरतालवृन्तमन्दमारुतकोकिलकलरुतवसन्तविकासि-तचूतव्रातगन्धकर्पूरधूलिदिव्यपौष्पान्तरसौरभ्यसारमहागरुवर्तिका निकरधूपघनसारघनवर्तिकानेकलसत्काचापवरकप्रदीपमृदुलतर-तूलिकोल्लासितपर्यङ्कमालतीकुसुमशय्याविराजमानरमणीसमालिङ्ग-नचुम्बननिधुवनसुखशयनवैतालिकसूतमागधबन्दिमधुरध्वनिसमुत्था नमङ्गलस्नानसमुद्वर्तनशुद्धवसनातिलकविलेखनादिप्रतिपदसाध्वस-बीजश्वापदानन्तकोटिकुटिला(सु) नैय्यायिकप्रमत्तगोमायुवि-सरासु तार्किकजम्बूकधूर्ततासंख्यातदीनप्राणिसरणिषु साङ्ख्य-घूकपरिभीषितशान्तकपोतव्रातासु मीमांसकगृध्रविद्रावितचारुत-तरविचारचकोरश्रेणिषु माध्वमहाध्वाङ्क्षसङ्क्षोभितपरभृतसन्ततिषु सौत्रान्तिकवैनाशिकवैभाषिकयोगाचारार्हतजैनभुजङ्गराजराजि-विराजितनास्तिकषड्दर्शनीवल्मीकव्रजासु स्वर्गनरकाधित्यकोप-

१ मार्गसमूहाः । २ विषवनसमूहः । ३ भल्लूकसमूहेषु । ४ ऊर्ध्वतना भूमिः ।

त्यकाधिरोहावरोहमहाश्रमगहनासु अणिमादिषड्गुणैश्वर्यवानरव्यूहप्रेङ्खायितशमदमादिराजहंसराजिषु च संसारकान्तारदुस्तरतरारण्यानीदुरवधिमेदिनीषु सन्ततमन्तःशून्यमनन्तकोटिब्रह्मकल्पान्तमपि घटीयन्त्रन्यायेन शुकनलिकान्यायेन च परिभ्रमन्तः सन्तः कियद्विषण्णाः किल वयं तत्तावतापि महानहसाङ्गिरसेनापि देव्यौ गिरां देव्या वापि वक्तुमशक्यमतस्त्राहित्राहि त्वमस्माद् द्वैतकालककूटमहापङ्कात्मकदुरकूपारतः करुणामयामृतसरित्पते । तस्माद्भवत्पादपल्लवतलमेव शरणमुपगतोस्मीति गलदक्षिकमलजलः स भूपालस्त्रितलमुनिवरचरणकमलमेव प्राञ्जलिः प्रणतो दण्डवन्निपपात । अथ सोपि सदयधौरेयः क्वास्ति नाम दृश्यप्रपञ्चः स्वस्वरूपे कालत्रयमपीत्यतो व्युत्तिष्ठव्युत्तिष्ठ भो भूपते त्वमधुनेत्यनुकम्पामृतासारैस्तमखण्डाद्वैतब्रह्मकैवल्यस्वरूपस्वाराज्ये समभिषिञ्चंस्तन्मस्तके तावदभयाविद्योतकं निजपाणिपद्मरूपमेकातपत्रं संस्थाप्य तं सानुरागं ससंभ्रमं चोत्थापितवान् । समब्रवीच्चेदम् ।

राजन्साधनधीचतुष्टयलसद्बीजतेजोम्बुजो
व्यक्तः पल्लवितः श्रुतेरथ मतेर्ध्यानाच्च सपुष्पितः ॥
ज्ञानादुत्कलितश्च मानसवने मोक्षद्रुवृक्षस्तदा
क्षीयन्तेखिलदुःखसंशयमहाकर्मौघधीग्रन्थयः ॥ ३६ ॥

अथ किं ज्ञेयं नाम यज्ज्ञानादेव मुक्तिरिति । आकलयात्रसकलश्रुतिमौलिमालतीमुकुलसुललितविलसदमन्दमकरन्दम् ।

---

१ अधस्तनाभूमिः । २ महारण्यम् । ३ सरस्वत्या अपि वाण्या इत्यर्थः । ४ अद्वितीयं छत्रम् । एवातपत्रमिति पाठे तु सुगमम् ।

शिवमेकमनन्तमद्वितीयं परमानन्दमखण्डचित्स्वभावम् ॥
सदभेदनिजात्मबोधमात्रं विमलं ब्रह्म विबोध्यमाहुरार्याः ३७

आकाशवत्सर्वगतः स आत्मा नोदेति नैवास्तमुपैति नित्यः ॥
प्रत्यक्ष एव प्रकटप्रकाशः सत्यः सदानन्दघनश्च भूमा ॥ ३८ ॥

अज्ञानदर्पणवशेन तव स्वरूपे
द्वैतं प्रकल्पितमिदं प्रतिबिम्बकल्पम् ॥
तत्सत्तयैव सदिवास्ति तवैव भासा
भातीव तेन विमला दृगसि त्वमेव ॥ ३९ ॥

अथ भगीरथः परमोत्तमतराधिकारितया सद्यःसंजाताद्वैतब्रह्मात्मैक्यसाक्षात्कारनिरस्तमूलाविद्यः स्वानुभवं स्वगुरुं प्रति विशदयति पृच्छति च तद्ध्वंसाभावप्रयुक्तदृश्यावभासध्वंसं तदापरोक्षदार्ढ्योपायं च ।

चिदेकविमलप्रभागुणविहीनसत्ताभिधा
दृगेकरसरूपिणी त्रिविधभेदहीनाच्युता ।
अनन्तसुखसुन्दरी मदभिदैव दृष्टा मया
तदैव लयमागतं निखिलमेव दृश्यं मम ॥ ४० ॥

तथापि न दृढं मया किमिति दृश्यमार्गाम्बुनः
प्रभाकरकरोषरक्षितितलत्वमास्वाद्यते ।
विनाशमपि नैति तत्किमिति शुक्तिरूप्योपमं
पुनःपुनरुदेति यच्चिदनुसंधिशून्यक्षणे ॥ ४१ ॥

इत्याकर्ण्य क्षितिपतिवचस्तस्य राज्याभिमाना-
देव भ्राजद्विपुलविषयेष्वाशु चेतःप्रचारात् ॥
विक्षेपांशः स्फुटति च ततो न स्थिरं ह्यप्रतीचि
तेनाज्ञानं स्फुरति सदिवे सोद्यतं प्राह सैषः ॥ ४२ ॥

तेजोरूपशमादिपाकविरहस्त्वन्मोक्षवृक्षे फलं
तद्दिव्यं कथमेष्यतीत्यत इह क्षिप्रं स आसाद्यतां ।
तद्रागादिमहीरुहैर्यदनहंकारोध्ययाच्छादना-
न्नैतस्मिंश्चरतीति छिन्धि किल तां त्यागैः कुठारैरलं ४३

अथ भगीरथः संश्लथमनोरथ इव अनथमानमुपथ इव च पुनरपि तं प्रार्थयते ॥

अनादिकालादयमस्ति रूढो
देहाचलेऽहंकृतिशाल्यलिद्रुमः ॥
उन्मूलितुं यत्नशतेप्यशक्यः
संभावितोत्रादिश किं नु साधनम् ॥ ४४ ॥

ततः स भगवांस्त्रितलमुनिः प्रारब्धकर्माग्रहे जीवस्य सुखदुःखावादावेव न तु देहाद्यभिमानेपीति गूढाभिसंधिं मन्वानस्तमुत्तरयति ॥

स्वक्चन्दनेन्दुवदनादिसुखोपभोग
दुर्वासना विषवती बत पूतनैव ॥
याहंकृतिर्नटति रे कपटेन जाता
चिन्मात्रदिव्यरमणी हरिमारणाय ॥ ४५ ॥
तां चेदसावकलयन्निजबालभावं
भूमन्नमेव हृदये यदि लक्षयेत्तत् ॥
किं तर्हि लोकविदितं निजबाल्यमेत-
न्नैव त्यजन्नपि मुदा परिशोषयेत ॥ ४६ ॥
दुर्वासनाविषमिदं प्रबलं तदीयं
पीत्वैव मारय च तां बत पूतनां त्वम् ।

---

१ अनधिगतमार्ग इव ।

सैषा ततो न भविता किमु राक्षसीह
प्रत्यक्षमेव च नृणां भगवानपि त्वं ॥ ४७ ॥

राज्यं चैतदहं त्यजामि यदि चेद्भूयाज्जनामान्यता
शत्रूणामुपहास्यतामि च मयि स्याद्वीक्ष्य भोज्यादिना ।
जीविष्यामि कथं नु कोमलतनूरित्यादिचिन्तादिभि-
र्न त्यागः समुदेति यावदिह ते तावत्कुदुःखक्षयः ॥४८॥

तदिदं यदि सर्वमेव राज्यं निजबोधेन विहाय निश्चलश्चेत् ॥
भवसि त्वमनन्तसौख्यसिन्धौ तदहो मुक्तिरमापतिस्त्वमेव ४९

त्यक्ताशेषोपचारः स्त्रियमपि सकलां सम्परित्यज्य शत्रौ
ध्वंसत्सर्वैषणः सन्नरिषु विगतभीर्भैक्ष्यमेवाददानः ॥
शान्ताहङ्कारवातोस्तमिततनुमुखः सर्वथाऽकिंचनश्च
त्यक्त्वा मां सद्गुरुत्वादभिमतमपि चेद्यासि तर्हीश्वरोसि॥५०॥

ततस्तद्वाक्यामृतपूरितचित्तकेदारः सर्वसङ्गपरित्यागयात्र कर्त-व्यावशिष्टसंव्यवहारः । शान्तसकलप्रश्नव्यापारः श्रीगुरुचरणा-रुणनिलयोरलिवत्कृतनमस्कारः स भूपतिवरः सम्पादिताचार्या-नुज्ञावरः परममन्थरतरसञ्चारः शनैरूागतानुचरश्च सुरतान्त-सुन्दरीकान्त इव तृतोप्यनृतः प्रातः कासार[1] इव संफुल्लमुखक-मलोपि मुकुलायमाननयनेन्दीवरः विरहिणीदेह इव शिथिलतर-व्यापारोप्युर्वरितशीतलतासाधनसम्पादनव्यवहारः अभिसारि-कानिकर इव निर्णीतप्रेयःप्राप्तिसङ्केतोपि साशङ्कान्तःकरणः प्रमदापाङ्ग इवानुभूतश्रुत्यन्तसुखोप्यनुरागानपगतचापल्यः प्रौढ-मानवतीवचःप्रचार इव सम्पादितस्वमहत्वोपि दुर्लभोदयश्च सोयं समागत्य नित्यकर्मविशेषं निवर्तयामास ।

अथ स सुरभावग्निष्टोमं विधाय दिनत्रया-
दवितरदहो गोभूहेमाद्यलं निखिलं धनम् ॥

---

१ प्रातःकाले सरइव ।

विधिदृग्गरणावारोप्याग्नीन्निजां रमणीं च तां
श्वशुरनिलये संस्थाप्यारेः स्वराज्यमदोर्पयत् ॥ ९१ ॥
अधोवासः शेषः कलितयतिपात्रश्च नृपति-
र्विनिर्यातो यत्र स्फुटपरिचयी कोपि न भवेत् ॥
भ्रमन् ग्रामेरण्येनल इव विनार्तिं परमसौ
झटित्येवानिच्छः स्वचितिशमविश्रान्तिमगमत् ॥ ९२ ॥

एवं शौचस्नानभिक्षानिद्रामात्रव्यापारः स नरवरः सूर्यास्तैकागार[१]: स्वच्छन्दसञ्चारश्च सन् कदाचिदरण्य एव कदाचिन्नदीपुलिन एव कदाचिद्वृक्षतल एव कदाचित्कुलालशालायामेव कदाचिन्निर्मानुषे देवतामन्दिर एव निद्राति विश्राम्यति ध्यायति गायति हृष्यति रोदिति जल्पति च स्वेनैव सहान्यत्रतु मौन्येव जडभरत इव जडभरतोपि ऋषभदेव इव ऋषभदेवोपि शुक इवाशुकोपि संवर्त इवासम्वर्तोपि कदाचिद्यदृच्छयैवावशोपि ब्रह्माद्वैतात्मतत्वाकाशमेव दृश्यकालिमावभासाधिकरणत्वोपलक्षितनित्यापरोक्षस्वप्रकाशचिदाकाशोहमिति सदेकरसप्रत्यनुसन्धानतो जगदकलयन्निव शुष्कपर्णवत्सुप्तप्रबुद्धवदादर्शपुरुषवद्दक्षिणावर्तभ्रामितचक्रवद्धनुर्मुक्तेषुवच्च संस्कारमात्रप्रेरितप्राणपवनव्यापारितशरीरतया समनुकूलतत्तद्भोगप्रदप्रारब्धकर्मसञ्जातमार्गभ्रमानुकूलकालवशाच्छत्रुपालितमयोध्यापुरमेव पुनरवाप । तत्र च प्रवाहपतितानि विविधद्विजोद्वासितानि प्राप्याध्वगत्वेनैव प्राग्वन्मध्याह्ने पौरान्मान्त्रिगश्च प्रति परमशमी सिद्धान्नमेव पुनरवाप । ततस्तैरकस्मादयं देवो भगीरथ एवेति परिज्ञाय परमविषण्णैः ससम्भ्रमं पूर्वाधिकतया परिचर्यया समर्चितः सञ्जातबहुतरस-

१ सूर्यास्त एव गृहं यस्य ।

ङ्कोचभरेण जयतु देवो राजा भगीरथ इति सानुनयं सप्रश्रयं सन्नमाणानिचयं च शत्रुणापि तेन देवगरिपालयेदमालोकालोकचक्रवालं भूमण्डलराज्यं यदासीद्दासीभूते मयि भावत्कनिक्षेपभूतये तावत्कालपर्यन्तामिति शतशोऽपि सम्प्रार्थितः सन् कथंचिदपि तृणलेशमप्यशनादृते कदाचित्क्वचिदपि सकलमपि दृश्यजालं मृगजलायमानमेव कलयन्नैवादत्तेस्य ।

एवं निनीय कतिदिवसांश्च तत्र
याहच्छिकत्ववशतोथ जगाम तस्मात् ॥
हाहा कथं बत भगीरथ एष राजा
पौरैरिति प्रतिपदं परिशोचितश्च ॥ ९२ ॥
किः दुःसहं सुमनसां विदुषां किमिष्टं
किं दुःस्त्यजं धृतधियां च सतां किमाप्यम् ॥
किं दुःष्करं यतहृदां स्वविदां किमर्थं
किं सेव्यमद्वयमुदां स्वचितां किमन्यत् ॥ ९३ ॥

अथ कदाचिदयं त्रितलं गुरुं शिशिरमात्मनि शान्तसुखाकृतिः ॥
अमृतपूर्णकलं शशिनं यथा शुचितनूरलभच्छरदागमः ॥ ९४ ॥

ततः स्वसद्गुरुसन्दर्शनानन्दितमानसः समनुकूलविकसितसहस्त्रदलराजहंसः सकलजीवन्मुक्तावतंसः सम्प्राप्तं तमात्माचार्यं यथाविधि साष्टाङ्गप्रणामशतैः सहस्रांशुमिव तदुपदेशपरिपालनजनितनिजकृतकृत्यताऽभिनवकान्तारतानुभवामृतासारपरिपूरितान्तःकरणताकृतनिजसलज्जताविवशताप्रयुक्तसायन्तनशरन्नलिनायमानलोचन एवाभिवादयामास । सोप्येनं सुप्रसन्नवदनेन्दुः स्मेराङ्कुरकौमुदीसम्पृक्तलोचनेन्दीवरविकासप्रसरदतुलरुचिनिचयत्रास्तरचमत्कारैरतिसम्पूर्णसर्वकामतया प्रदेयानवशेषमवकल-

य्य नैजाद्वैतात्मतत्त्वानुसन्धानाधीनधीपारवश्येन चावलोकनैरेव परमाशीरोधैरनुजग्राह ।

आसीत्तदा तद्दिनमेव राका[1] सायन्तनाकाशमहो जनानाम् ॥
सांमुख्यया जग्मतुरत्र यस्माद्राजा च वेदैकविवृद्धतेजाः ॥५५॥

ततः कृतकुशलप्रश्नेन विहितानामयप्रश्नोसौ भगीरथः कचित्कालं विपिने वा भूधरे वा नगरे वा आरामे वा ग्रामे वा सह तेनैवसममनुचरतयैवानुचचार ।

सद्वृत्तौ समताङ्कतौ च गुरुतानुग्राह्यतायोगतः
स्वस्थौ कान्तियुतौ रसैकसुघनौ मुक्तालिसम्पूजितौ ॥
जीवन्मुक्तिसमाह्वबोधयुवतेस्तुङ्गौ किमेतौ स्तनौ
नित्यं चक्रतुरद्वयात्मनिरतौ क्रीडादिसन्दीपनम् ॥५६॥

तौ केवलं कलयतोद्य्हशि लीलयैव
देहस्य धारणमिदं नतु नैजदृष्ट्या ॥
आनन्दमात्ररसपूरितपूर्णकुम्भौ
विद्याचिदात्मशिवयोरिव मङ्गलाय ॥ ५७ ॥

देहोयं किमिह चितात्मया धृतोस्ति
त्यक्तो वा भवति किमेष बोधयोगात् ॥
किंत्वेतन्मृगजलमेव दृश्यजालं
चिद्भानोर्मम तु दृशा नहि त्रिकालम् ॥ ५८ ॥

आकल्पं लसतु तदेष शास्त्रपङ्क्तेः
शिष्टानामपि सरणीरनुप्रवृत्तः ॥
अद्यैव प्रलयमुपैतु वा तथापि
को लाभःश्चिति मयि का नु वास्ति हानिः ॥ ५९ ॥

---

१ पौर्णिमा ।

नो दुःखं न विषयसौख्यमस्ति यस्मि-
न्नौदास्यं न च विलयो न वा कषायः ॥
विक्षेपो न च न तथा वृतिस्तदेव
स्वानन्दामृतमहमेव चिद्विहापः ॥ ६० ॥

इति बोधविपाक आत्मनिष्ठौ गुरुशिष्यौ मुनिधीरवीरवर्यौ ॥
तदलं चलितापि दृष्टदेवैरपि क्लृप्तं मनुतः प्रियं तृणाभम्॥६१॥

अथ जनदृशाक्लृप्तारब्धक्रमागतमन्वहं
सुखयुतमहद्दुःखं प्राप्तं ननन्दतुरेव तौ ॥
परमशमिनौ ब्रह्मिष्ठत्वादनिच्छतया स्थितौ
किमु निर्जनिभौ ब्रह्मक्षेत्रेश्वरौ शशिभास्करौ ॥ ६२ ॥

ततः कदाचित्कस्मिंश्चिद्राजमण्डलान्तरे निरपत्य एव तद्राष्ट्रनृपतौ मृते सति ससैन्यास्तत्पौरामात्यादयः प्रणष्टप्रजापालनमर्यादावैक्लव्येन निजपालनार्थं किंचित्तादृशसामुद्रिकशास्त्रोक्तचक्रवर्तिचिह्नाजानुबाहुकर्णनेत्रत्वादितर्कितसकलप्रजापालनशक्तिगुणलक्ष्मीवन्तं पुरुषधौरेयमरण्यगिरिनद्यादौ तादृशयोगीशसत्त्वसम्भवादन्वेषयन्तः सन्तः क्वचिदेकदाऽनयोरुक्तचर्यया परिभ्रमतोर्गुरुशिष्ययोर्मध्ये त्रितलस्य स्नानादिना क्षणं विरहे जायमाने वृक्षमूलेवस्थितं व्युत्थितास्थितप्रज्ञं देवं भगीरथं दूरादालक्ष्याकस्मात्तमुपसृत्य मन्त्रिवृद्धवचनैस्तं तथात्वेन निर्णीय तत्रैव तं हस्त्यादिचतुरङ्गसैन्यमध्ये शिबिकायामधिवाह्य नीत्वा स्वमण्डलाखण्डलस्वराज्याभिषेकं चक्रुः। ततः स क्षणमात्रेणैव तथा महत्या सेनया परिवेष्टितः प्रोत्तुङ्गालंकृतदन्तावलेधिरूढः सन् भगीरथोयं प्रजानाथो जयतितरामिति जनध्वनिसहस्रैः साधित-

१ सौगन्ध्यम्। २ स्वप्रकाशौ।

सकलमहागिरीन्द्रगुहाप्रतिध्वनिभस्तैः सहैव तद्राष्ट्रराजधानीं गत्वा शास्त्रावरुद्धपरेच्छाप्रारब्धापतितं तद्राज्यं स्वेच्छाङ्कुराच्छपालेशस्यापि राहित्यात्केवलमौदासिन्यमात्रेणैव तद्रत्नसिंहासने समधिरुह्य तदानीं मन्वाद्युक्तरीत्यैव परिपालयामास । युक्तमेवैतज्जीवन्मुक्तस्य तस्य । तथा हि ।

यावन्नाकलितः स्वजातिजफलो यावच्च नास्वादितो
रासालो मुकुलः पिकार्भककुलैस्तावच्च तेषां भवेत् ॥
सङ्गात्काककुलस्य पिण्डकलनं द्राक्षारसास्वादनं
दैवात्कीर[1]कुलस्य सङ्गमवशादूर्ध्वं च ताभ्यां क्व किम् ६३

अथ यथोक्तमाण्डलिकराज्यपालनप्रथितकीर्तिकौमुद्या भूरितरविरहरविकरनिकरखरतरपरितापसंतप्ताः साकेताभिधायोध्यामहाराजधानीनन्दवनानीसंसक्तः प्राक्तनप्रकृतिचकोरव्राताः सरभसं सोत्कण्ठं ससम्भ्रमं सादरं सानुरागं च तं भगीरथाख्यशरद्राकानाथं प्रत्यागत्य स्वतृप्त्यर्थं कुलकलैस्तं सम्प्रार्थयानाः साभिवादनाः सविनयप्रसादनाश्चेत्थं सुप्रलेपुः ।

देव त्वं जय सर्वदैव भवतास्माकं पदा यः कृतो
राजेवैष समाप्तिमाप तदिमान्सम्पालयास्मानिति ॥
ये त्वत्प्रार्थितमेव यान्ति निगमैः साकं विरोधं विना
नार्थानामुचितोऽस्ति कुत्रचिदपि त्यागः सतां तादृशाम् ॥६४॥

एवमाकर्ण्यतदभ्यर्थनां प्रागुक्तरीत्यैव गत्या स तदु[2]ररीचकार ।

आगत्य तैः सह यथाविधि स त्वयोध्या-
माधाय चाग्निनिचयं विधितोर्धराज्यम् ॥
सप्ताब्धिमेखलितभूवलयस्य चक्रे
शस्त्रे च शास्त्रनिकरे च महाप्रवीणः ॥ ६५ ॥

---

१ 'पोपट' इति प्रसिद्धःपक्षी । २ स्वीचकार ।

कान्तानन्तामुक्तता चापि युक्ता रूपैर्द्वीपैः सप्तभिर्भूमिकल्पैः ॥
सक्ता भुक्ता तेन मुक्तालिगुप्ता कोपैर्भूपैश्चापि हीनैव पापैः ६६

श्यामातुलेन विरहेण कृशातिपाण्डुः
केशप्रसाधनविहीनतया विभूषा ॥
तं प्राप्य तत्कातिविलासविचित्रभोगै-
र्देहं पुपोष महिषीव मही चिराय ॥ ६७ ॥

त्रिवेणी तद्वाणी हितमितऋतत्वेन समतां
गतं शान्तं लोकानमृतमिव चित्तं वितरति ॥
यथा वा तद्दृष्टिः सितमासितमारक्तमपि च
दधाना रूपं तान्विशदयति चिद्रूपममलम् ॥ ६८ ॥

किं च ।

व्यवहारसृतेर्यदा यदा संकुरुते सौ विहितं तदा तदेव ॥
न च विस्मयमेति किञ्चिदन्तः क्वचिदप्येष महाद्भुतेपि दृष्टे६९

यतः । स्वयमेव सर्वाश्चर्यनिदानं सः ।

निर्मत्सरः सततमात्मनि वीतरागः
स्वस्थः स्वधर्मनिरतः शमितामुपेतः ॥
भूचक्रवर्त्यपि युवापि भजन्नपि क्ष्मां
शत्रुंजयोपि सरसोपि भगीरथोभूत् ॥ ७० ॥

इत्यच्युतविरचिते श्रीभागीरथीकथाख्ये भगीरथस्ययौवन एव विरक्तिगुरूपसत्तिब्रह्मविद्याप्तिसर्वधनोज्झितिनिरातिशयशान्तिपुनर्गुरुसङ्गतियादृच्छिकराज्यान्तरावाप्तिपुनःसकलस्वराज्यचक्रवर्तित्वस्थितिप्रथात्मा तृतीयो मनोरथः सम्पूर्णः ॥ ३ ॥

—०:०—

## चतुर्थमनोरथः ।

अथ भगीरथ आत्मपितामहांस्त्रिपथगामृतमात्रभवद्गतीन् ॥
समवाधार्य सवृद्धपरम्परावचनतस्तदुपायपरोभवत् ॥ १ ॥

वंशाचार्यमरुन्धतीपतिमतः श्रीमद्वसिष्ठाभिधं
सर्वज्ञं मुनिमेत्य सत्यभिलसद्गात्रः पवित्रः शनैः ॥
एकान्ते समपृच्छदेवमतुलप्रेमप्रकाशोन्मुखो
वाप्यां फुल्लरसालशाखिनमिव भ्राजत्कलैः कोकिलः॥२॥

भगवन्नपरहिरण्यगर्भवैभवसम्भारयशःशीतांशुकरविसरसम्भरितहरिदङ्गनावदनचन्दनाचित्रकमरीचिनिचयचन्द्रमणिसरणेभानुकुलकमलिनीनलिनकोरकनिकरतरणे सद्गुरुतासमवक्रान्तस्वचरणारुणनलिनसंसारहरिणवारिमहार्णवतरुणतरतरणे कासौ भगवती गङ्गा नाम यदेकानयनमन्तरा तुरगमेधतुरगापहारकपरिशोधनधीकृतखननरचितसप्तपरिखाकाराखातसागराणां स्वप्रमादकदम्बकप्रकुपितकपिलाभिधानभगवत्कमललोचनकपिलविलोचनसप्रचण्डालोचनशापानलसंप्लुष्टषष्टिसहस्रसागराणां मामकप्रपितामहनिकराणां समुद्धरणं नैव भविष्यतीति श्रूयते किंवदन्तीति।

ततस्तद्वचनं निशम्य क्षणं चेतः संयम्य सकलसंयमिवरिष्ठो भगवान्वसिष्ठो गङ्गापदशक्यं सपरिकरं सविस्तरं च प्रपञ्चयामास ।

शब्दब्रह्महिमाचलस्य तनये द्वे वा अभूतां पुरा
तत्राद्या कुटिलाभिधा निगदिता शब्दैकविद्यात्मिका ॥

---

१ त्रिपथगाया भागीरथ्या अमृतं जलम् तेन केवलेन भवती भाव्या गतिः येषां तान् । २ गङ्गापदव्युत्पत्तिम् ।

अन्त्योमाभिधया प्रथामुपगता ब्रह्मैकविद्यात्मिका
याभ्यामद्वितयात्मशङ्करवपुःसङ्गाज्जगत्पावितम् ॥ ३ ॥
तत्र ज्येष्ठा त्वधीति प्रमितिचिरतराचारचारुप्रचार-
श्रीलावण्यालिराजद्गुणगणविलसद्यौवनोद्गारदिव्या ॥
आसीत्किं कल्पवल्ली किसलयकलिकापुष्पभूयःफलाढ्या
किं वासौ कामसेनागजरथतुरगोद्यत्पदातीज्यपूज्या ॥ ४ ॥

ततश्च ।

तस्याः पदद्वयतयेव पदे पदत्वं
यत्तस्य तौल्यरसकामनया किलैषः ॥
भूत्वा सहस्रवदनोपि सहस्रपत्रं
नैवाप तं भजति तेन सहस्ररश्मिम्[1] ॥ ५ ॥

किंच ।

तत्पादयोर्नखमिषाच्छरणागतेन
चिन्तामणीन्द्रनिचयेन निजोनुरागः ॥
सर्वात्मना विनिहितोप्यतुलः स तत्र
पूर्तेरमान्प्रतिपदं बहिरेव याति ॥ ६ ॥

गतिमाप्तुमिमे पदोः किमस्याः कमलेभ्योपि बिसानि राजहंसाः ।
अपि मानसतोमृतं पिबन्तः शुचयोद्योपि वनेषु भक्षयन्ति ॥ ७ ॥
स्निग्धे सुवृत्ते च न दीर्घह्रस्वे हेमोल्लसच्चम्पककोरकाभे ॥
ओजस्विनी वीक्ष्य तदीयजङ्घे तनूरुहैर्नाम वृथैव चक्रे ॥ ८ ॥

क्षीराब्धेर्नवनीततां यदि गतोस्त्यैरावतीयः करः
स्यात्तस्याः स्मरसार्वभौमवपुषोप्यूरुद्वयस्योपमा ॥
एवं वज्रघनं रहः सहचरीदृश्यं कथं वर्ण्यतां
यायादित्यगमन्मनोभवमहामायाऽऽगता वाच्यताम् ॥ ९ ॥

---

१ सूर्यम् ।

तत्राभिगम्भीररसरःसमुत्थातारुण्यजाड्यादिव बाष्पलेखा ॥
दृश्याप्यदृश्येव बभूव सूक्ष्मा रोमावलीमादनधूपवल्ली ॥१०॥

त्रेधा निबद्धबलिमेव तदीयमध्यो
यातोत्र विष्णुपदतामथ तत्कुचौ तु ॥
आनृण्यमेतुमिव नैजपितामहस्य
हेमाचलं तृणयतो बत कान्यवार्ता ॥ ११ ॥

प्रत्यङ्गनिष्ठस्पर्द्धनाय स्मरेण स्वर्हैमाब्जादुद्धृताभ्यां बिसाभ्याम् ॥
कृत्वा तस्या बाहुयुग्माख्यपाशं तेन स्वस्मिन्पाशिता साधितेव१२

तत्पाणिपद्मयुगुलं लसदङ्गुलीभिः
संवर्तिकाभिरभितोग्रनखाग्रषाड्भिः ॥
तुच्छीकरोति सुरनीपनवाङ्कुरालिं
को वा न माद्यति जनो महदाश्रयेण ॥ १३ ॥

कुचकाञ्चनकञ्जकोरकौ वदनेन्दोर्भयतः सदा मुनी ॥
सुरभिस्तु यदेकनालतः स गतस्तद्दल एव मञ्जुताम् ॥ १४ ॥

अहो रात्रिम्लानी क्षयहिमभये यत्र भजति
कलं कालिव्रातावपि च न तमः कण्टकवृती ॥
न पाण्डुारुण्ये च क्वचिदपि ततस्तन्मुखमहो
शशाङ्काम्भोजाभ्यां श्रवति किल चित्रां श्रियमलम् १५

तन्नासापुटसुषुमैकदेशयोगं प्राप्यैव प्रकटतरं किमु प्रकाशम् ॥
स्नेहैकातुलभरितं सुबीजकोशं स्वं कार्ये तिलकसुमं तनोति लोके१६

अमृतप्लुतमन्दहासकान्तिच्छुरितं तद्वदनच्छदं विलोक्य ॥
अपि विद्रुमवल्लरीपदेस्मिन्विपदं तामुपसर्गतां तदाप ॥ १७ ॥

तन्नेत्रे मदनान्तिमास्त्रसुषमा भाग्ये चकोरान्मृगा-
न्मीनांश्चापि भृशं भयं जनयतः श्रुत्यन्तचारे अपि ॥

तेनैतैर्वनवास एव कलितः को वा न रागी स्वतः
सम्प्राप्तां जनभूरिकार्ष्ण्यविभवः सत्संग्यपि स्यात् खलः १८

कुसुमास्त्रधनुर्लते भ्रुवौ किल तस्या भवतः स्वतो न ते ॥
सचिवे च कटाक्षपत्रिणामपि तारुण्यगुणाधिरोपणात् ॥१९॥

कृष्णो यदा भुवि जनिं जगृहे तदानी-
मुत्तानमूर्ध्वमभवच्छकलं सुधांशोः ॥
सोभूत्तदीयकबरीमिषतो यदोर्ध्वं
न्युब्जं तदालिकमिषाद्रुचितं तदस्याः ॥ २० ॥

भाले तदा कौङ्कुमचित्रकं यच्छम्भोस्तृतीयेक्षणतुल्यशोभम् ॥
विरच्यते तत्तदपाकृतस्य तेनैव सञ्जीवननार्थमेव ॥ २१ ॥

सीमन्तः सरलतरः शुचिः सरागो
मुक्त्याल्यापि च सुमनोभिरर्चितोतः ॥
केशालंकृतचिरचारुपार्श्वयुग्मो
लक्ष्मी वा न तु कुरुते हरिं किमस्याः ॥ २२ ॥

अतुलकुटिलोपि स्निग्धोयं गतोप्यतिकालता-
ममृतमयतां यातोनङ्गो जनेर्जगतीतले ॥
ललितकबरीभारस्तस्या ध्रुवं सुमनोगणा-
त्क इह न महत्सङ्गात्तुङ्गो भवेन्मलिनोपि वा ॥ २३ ॥

सुघना अप्यति सूक्ष्मा दीर्घा अपि ह्रस्वताजुषो जूव्या ॥
मलिना अपि बहुविमलास्तद्वालाश्चारुचित्रतां याताः ॥२४॥

न केवलमस्याः सौन्दर्यवर्यतामात्रमपि तु पितुरनन्तरत्ननित्यनूत्नाकरत्वेन तदनुकूलनिखिलमहालङ्कारसमलंकृतत्वमपि सततम्। तथा हि।

---

१ जन्म। २ मदनः। ३ पुष्पसमूहात्।

धत्ते धम्मिलदेशे विकसितविलसन्मल्लिचूडामणिं सा
मुक्ताजालं च केशेष्वपि च मणिमयी यत्र पाश्यां ललाटे ॥
सीमन्ते बालबन्दीस्थलतदुभयतः पारितथ्यां च भास्व-
न्मुक्तापङ्क्तिं च रत्नप्रचुरतरलसत्कर्णिके कर्णयोश्च ॥ २५ ॥
नासिकां ललितलोलमौक्तिकैः स्थूलताजितशुचिस्मिताङ्कुरैः ॥
हेमसूत्रवररत्नगुम्फितैः संविभूषयति नित्यमेव सा ॥ २६ ॥
माणिक्यवैदूर्यमहेन्द्रनीलगोमेदगारुत्मतपद्मरागैः ॥
वज्रोल्लसत्पुष्करहीरकैश्च ग्रैवेयकं संग्रथितं दधौ सा ॥ २७ ॥
देवच्छन्दमुरोजयोश्च भुजयो रत्नाङ्गदे हस्तयो-
र्नानारत्नविराजिहेमवलयश्रेण्यौ लसत्कङ्कणे ॥
आरुण्योल्लसदङ्गुलीष्वपि महापुण्याङ्कितांश्चोर्मिकाः
काञ्चीं रत्नमयीं तथा कटितटे सा संदधारादरात् ॥ २८ ॥
तुलाकोटीनानामणिगणविचित्रे ध्वनियुते
पदोः सा सन्धत्तेऽङ्गुलिषु च तदीयासु रुचिराः ॥
महारत्नभ्राजत्तदुचितविभूषाध्वनिमती-
स्तथा शुभ्रं वासः परिहितवती कञ्चुकमपि ॥ २९ ॥
निजाङ्गलोकोत्तरशौक्ल्यतः किं किंवा पितुस्तादृशवर्णयोगात् ॥
विशुद्धसत्त्वात्मतयाथ वासौ श्वेतैकमाल्याभरणाम्बरासीत् ॥ ३० ॥
हिमवत इयं कन्यापत्यं न हैमवती कथं
वदितुमुचितेत्येतत्तस्याः सुनाम जगत्यभूत् ॥
अपरमनिशं दृङ्केशोऽतुलं कुटिलत्वतः
स्फुटति कुटिलेत्येतद्गौणं तदाभिजनं स्मृतम् ॥ ३१ ॥
मुख्यं तु गङ्गेति तदीयनाम पित्रादिभिर्यद्विहितं पुराभूत् ॥

---

१ गां पृथ्वीं गच्छतीति गङ्गा ह्रस्वो मुम् च आर्षः ।

योगोपि तत्रानुसृतो यदेषा गां भूमिमेवास्ति गतादिशक्तिः २२

तदा तु पितामहमहाप्रसादसंपत्त्यै सुविपुलतपःपटलोत्तरं विश्व-स्मिन् क्षुभ्यमाणे त्वं वरं वृणीष्वेति छन्देन भाषमाणं मृत्युरेव मम कदापि मा भवत्विति तारकासुरेण तं प्रति वरे याचिते रे रेऽसुरवर त्वं प्रायः शुक्रशरणार्चनाश्चिताश्चितवाचां संचिन्तन-चणोपि किं ब्रूषे भावत्वावच्छिन्नजन्यत्वावच्छेदेन विनश्वरत्व-नैयत्यविरुद्धं स्वप्नेप्यसंभाव्यं तेन संभावितमुचितमेवाभ्यर्थयाभी-प्सितमिति तेनाक्षिप्तः सोसुरवरः स्वचेतस्येव भगवतः परमेश्वर-स्य भगवती नाम्ना यथार्थसती दाक्षायणी रमणी स्वपित्राचरित-क्रतौ स्वभर्त्रनाकारणानादरणनिन्दनादि तदादिकृतमाकर्ण्य प-त्नीशालायामेव स्थितवती यस्मादेतादृशादद्वैतसच्चिदानन्दपरब्र-ह्मनित्यशुद्धबुद्धमुक्तस्वप्रकाशभूमैकरसस्वमायामहिमाकलितस्वभ-क्तानुग्रहार्थपरमविशुद्धसत्त्वात्मकानन्तशान्तगुणचिन्तामणिगणा-करशरीरस्य भगवतः श्रीमच्चन्द्रशेखरस्यानन्तकोटिब्रह्माण्डोत्प-त्तिस्थितिप्रयोजकभ्रूभङ्गस्य मत्प्राणनाथस्यापि निन्दकादुत्पन्नमिदं भगवदङ्गसङ्गपवित्रमपि मद्देहकुणपमेवोक्तपावित्र्यांशरूपयौगिक-वीतिंहोत्रनिर्मथनपूर्वकतज्ज्वालाजालसात्करणत एव तत्तृतीयमूर्त्या यत्तं करोमीति स्वचेतःसंकल्पमात्रेण तथा चकारेति तस्य सांप्रतं पत्न्यभावान्नैसर्गिकोर्ध्वरेतस्त्वाच्च तत्पुत्रेतरत एव मन्मृत्युर्मास्त्वि-त्येव वरणीयं ततस्तस्य नित्यसिद्धनिरतिशयं वैराग्यशालित्वेना-दौ पत्न्यन्तरपरिणयप्रवृत्तेरेवासंभावात्तत्संभवेपि क्वचित्कदाचि-दपि प्राक्तनसतीसप्रतिमयुवत्यन्तरस्यैव सकलजगत्यामसंभवात्त-स्या एवावतारान्तरधारणस्य निरुक्तरीत्यामुक्तत्वेन व्योमकुसुमा-

---

१ अग्निमन्थन- ।

यमानत्वाच्च तुष्यतु दुर्जन इति न्यायेन यथाकथंचित्तथा त्वस्यापि संभवेप्यूर्ध्वरेतसो रतिविरक्तयोश्च तयोरतिप्रसङ्गवीर्यसंगयोस्तु सुतरां वन्ध्यादुहितृपुत्रायमाणत्वाच्च नान्तरीयकतयैव मत्समीहितसिद्धिरित्यध्यवस्य तथावृणोत्ततस्तेनोक्तवरे सर्वज्ञवरेण भगवता परमेष्ठिना दत्ते सति तत्प्रभावदृप्तोसाविति प्रमत्तः प्रकारविरहितव्यवहृतानमपि नानाप्रकारविपरीतकर्मा तारकासुरः सुरनरगरधरलोकानप्यनिशं संपीडयामासेति तत्रासससंत्रस्ताः सकलसुरवरास्तद्विलयोपायमन्वेषयन्तः सन्तः प्रकृतप्रालेयाचलबालिकामिमां कुटिलाख्यामलौकिकलावण्याभिख्यां यावदङ्गनागुणगरिमगाम्भीर्यसंजातप्रख्यां चालक्ष्याष्टवस्वेकादशरुद्रद्वादशादित्यपुरःसराः सादरं तुषारधराधरं तमेवं प्रार्थयामासुः।

मेनाप्राणपते वयं तव सुतां गङ्गाभिधानामिमां
भार्यार्थे शशिशेखरस्य सरसं धर्मप्रजार्थं द्रुतं॥
तस्य प्रेरणतो वृणीमह इति प्रायोम्बुदं केकिनो
वृष्टिं पुष्टिकृते जनस्य सततं धान्यादिनिष्पत्तितः २३

सोप्येतादृक्पात्रलाभेन तुष्टो देवानां तद्वाक्यमङ्गीचकार॥
ओमित्येवं सुप्रसन्नाननोथो देवास्ते तं याचयामासुरन्यत् २४

यदि रोचते हिमगिरे तवान्तरे
विषये प्रदर्शयितुमद्य तर्ह्यसौ॥
मृदुहासिनी तव सुता प्रदीयता
मिति सोपि बाढमिति चान्वमोदयत्॥ २५॥

ततस्ते चार्वङ्गीं ललितगुणभङ्गीं च मुदिताः
सुराः सर्वे गङ्गां सपदि सुपुरस्कृत्य सहसा॥

---

१ गरधराः नागाः। तेषां पाताललोक इत्यर्थः। २ हिमाचलम्।

यथुर्धातुर्लोकं यमिन इव विद्यां सुगणगां
निरस्तान्याशेषाभिलषणविशेषः सुखकरी ॥ ३६ ॥

अथ विरचितयथाविध्यभिवादनयूथाः सर्वसुरनाथाः प्रकृतां कुटिलनाम्नीं कुटिलकटाक्षभ्रुकुटीकुन्तलपालीं भगवतीं गङ्गामङ्गुलिनिर्देशपुरःसरं सनमस्कारं पुरःस्थितां प्रदर्शयन्तः भो भगवन् किमियं भगवतः शूलभृतः सकाशात्तारकासुरनाशकं शावकं नजनायिष्यतीत्यात्मनः परीक्षादक्षत्वं ध्वनयन्तः कृतकार्यतांमन्यतया सञ्जातसन्मदाः साक्षेपं सम्प्रपच्छुः । तदुत्तरं सोपि तानब्रवीत् ।

शैवं वीर्यमियं तपोविरहिताऽरूपादियुक्ताप्ययं
वत्सा धारयितुं कथं पटुरतो युष्माभिरुन्मुच्यताम् ॥
नह्यत्यन्तविनिर्मलापि च शिला चान्द्री तदोजो रवे
धृत्वालं जठरे कदाचिदपि वा वह्निं प्रसूते क्वचित्॥३७॥

एतन्निशम्य कुटिलाऽवददात्ममौग्ध्या-
दाराध्य विष्णुमहमद्य तथा यतिष्ये ॥
तेजः शिवस्य तु यथा निजलीलयैव
नैजोदरे तरलवत्किल धारयिष्ये ॥ ३८ ॥

ततः प्रकुपितः पितामहस्तां प्रति रे कुटिले यतस्त्वं मद्वचसि नैव विश्रम्भस्यतस्तव यौवनोन्मादप्रमदाजातिकन्दप्रयोजकीभूतजाड्यजर्जरतैव व्यज्यत इत्यतस्त्वं जडतामेव सद्यः स्वगुणसाफल्यायाप्नुहीत्यौर्दैहिकसकललोकपावनकोविदत्वासिद्ध्यर्थं तच्छापच्छलनेन जनाननुजग्राह चतुराननः । युक्तमेवैतत् । तथा हि ।

महतां किल सन्निधौ बुधः प्रतिजानीत न सत्यपीप्सिते ॥
न हि कङ्कणनूपुरादिवद्धृतहारोपि तनोति सिञ्जितम् ॥३९॥

१ पुत्रम् । २ भाविनः ।

किं चापरमप्युचितमेव कृतम् । यतः ।

एकस्य दुःखजननेन सुखं बहूनां
स्याच्चेतदप्यतुलयत्नशतैर्विधेयम् ॥
मुक्तान्विधातुमचिरात्कुटिलानशुभ्रा-
न्वालानुरःप्रियतमेन विमर्द्यमेव ॥ १० ॥

ततस्तत्क्षणमेव सा बभूव महाकल्लोलिनी । तत्स्वाभाव्यादुक्तद्विषयकामर्षपारवश्याच्च विरिञ्चिलोकमेवाखिलप्राह्लावयितुं प्रववृते च ।

गङ्गोत्तुङ्गतरङ्गरिङ्गणगणैराकाशरङ्गाङ्गणे
साङ्गोपाङ्गकुरङ्गसाङ्गिरुचिरापाङ्गायमानाङ्गकैः ॥
रिङ्गन्तीव सरङ्गमङ्गलमहासमङ्गवाराङ्गना
भङ्गीभङ्गमृदङ्गभङ्गुररवैः सत्यं समाप्लावयत् ॥ ११ ॥

अथ भगवानात्मभूस्तथोत्पथगां[1] गङ्गामालोच्य त्रयमिन्त्ररूपैर्वाङ्मयैरेव बन्धनैस्तत्रैव तां यथाभिलषितमभिरुरोध । दृश्यते चाद्यापि मन्दाकिनीप्रवाहः सकलैरपि शारदबहुलनिभावयवी बहुलतरं पाण्डुरः स्वर्हारायमाणः पुष्करकोशे । घटते चेदं सुतराम् । नह्यखिलब्रह्माण्डमण्डलपुण्डरीकगगनपारावारडिण्डिर[2]स्य भगवतः परमेष्ठिनोप्येतत्स्वस्वर्धुनीपरिरोधनमाम्नाय[3]ैकबन्धनैरेवागाधं नाम । यतः ।

एषामेव कृपाबलेन जगता धर्मादिराबेद्यते
किं चावाङ्मनसः प्रचारमपि तद्ब्रह्माद्वयं प्राप्यते ॥
दृष्टं लौकिकतेजसोपि बलतः संरोधनं वारिणां
तत्तैः स्यान्न कथं निरोधनमिदं तेजोभिराम्नायकैः॥१२॥

तत्र च ।

---

१ मार्गमनुगच्छन्तीम् । २ डिण्डिरः । ३ आम्नायोवेदः ।

सा रेजे कनकसरोजचारुवक्त्रा
वीचिभ्रूर्तु[1]लविलोलमीननेत्री ॥
कोकोरोरुहयुगुला सु[2]हंसका च
किं बाला न सुरतरङ्गिणी तदानीम् ॥ ४३ ॥

अपि च ।

दिव्याङ्गनास्तनगतं विपुलाङ्गरागं
संपाद्य कोकनदधीजननान्मिलिन्दान् ॥
या वञ्चयत्यनुदिनं दिवि राजहंसा-
नप्येवमेव तु चिराय पुनातु सा वः ॥ ४४ ॥

इति श्रीमज्जनस्थानक्षेत्रकृतवसतिपण्डितवर्याच्युतविरचिते श्रीभागीरथीकथाख्ये चम्पूकाव्ये गङ्गाब्रह्मलोकगमनप्रथात्मा चतुर्थो मनोरथः समाप्तिं प्राप ॥ ४ ॥

—००—

## पञ्चममनोरथः ।

एवं श्रुत्वा हैमवत्या नदीत्वं ब्राह्माच्छापादेव गङ्गाभिधायाः ॥
तत्रोमायाः का व्यवस्थेत्यपृच्छद्भूयो राजा तं गुरुं सोऽब्रवीत्तम् १

कनिष्ठा प्रालेयाचलविरुचकल्पद्रुमलता
सुता तु स्वाभाव्यात्तपसि पृथुकैव प्रववृते ॥
तदा मा[4]त्राश्चर्याद्भसत उ[5] मेति स्फुटतरं
निषिद्धा तेनासौ जगति तदुमाख्या समभवत् ॥ २ ॥
त्यक्तं यया दक्षमखे शरीरं सत्येव सात्रावतरान्चिदेषा ॥

१ मनिा एव नेत्राणि यस्याः पक्षे मीन इव नेत्रे यस्याः । २ सुष्ठु हंसा यस्यां समासान्तः कप् । पक्षे सुष्ठु हंसकाः पादभूषणानि यस्याः । ३ बाला-सत्येव । ४ मेनकया । ५ उ इति आश्चर्ये अव्ययम् मा इति निषेधे ।

यथाहुतिर्वह्निमुखे हुतैव कालात्मनाविर्भवतीन्दुबिम्बे ॥ ३ ॥

तदानीं तावन्मेना तस्याः समवलोक्यालौकिकौजस्वितुल्यकालसमुदितानन्तप्रचण्डताडित्तनूनपात्तपनताराताटेशोपमं पारमेश्वरविशुद्धशक्त्यात्मकं रूपं सद्यः प्रभीतेव भर्तारमाह्वयत् । सोप्युच्चतल्पास्थितपल्यङ्के तां डिम्भामपि तथा निरीक्ष्यातिविस्मितासौ मेना किंत्वीश्वर्येव मेनयाभिहितश्च तां तत्त्वेनास्तौत् । ततस्तया गौर्या विश्वरूपप्रदर्शनपूर्वकं तं प्रति तत्त्वविद्यामप्युपादिश्य तत्प्रार्थनयैवैश्वरं स्वरूपमुपसंहृत्य त्रैलोक्यसुन्दरं रूपमकारि ।

हिमाद्रेर्मैनाकादपि च कुटिलायाश्च विपुलं
बभूव प्रेमास्यां किमुत बत मातुस्तदतुलम् ॥
विधोर्जीवंजीवादपि च कुमुदिन्याश्च हृषदि
यदाहार्दाधिक्यं किमु पुनरमुष्य द्युतिसृतेः ॥ ४ ॥

किंचासौ तयैव कन्यया धन्य एवाभूत् । तथा हि ।

लक्ष्म्या क्षीराब्धिवच्च स्वविषयकलसद्विद्यया वेदवच्च
ज्योत्स्न्या वाकाशवच्च स्फुटतरदलितद्वैतमुक्त्यात्मवच्च ॥
दीप्त्या चण्डांशुवच्च प्रशमपरिरुचान्निष्ठया बोधवच्च
प्रीत्यातिस्नेहवच्च स्वहृदि हिमगिरिस्तुष्टिपुष्टस्तयासीत् ॥५॥

ततस्तस्याः शनैःशनैः कैशोरातिक्रमसमयसंधिरधिबन्धुरधुरंधरायते ।

सखीभिः पांचालीपरिणयविधौ संविरचिते
तिरोधत्ते गौरी पुलकितकपोलौ हिममिषात् ॥
अपाङ्गं श्रुत्यन्तं पतिसमनुयान्तं प्रतिलवं
न तस्या मीमांसापि च बहु परावर्तयाति च ॥ ६ ॥

१ तनूनपादग्निः तपनः सविता । २ मैनाको हिमाचलपुत्रः । ३ पक्षिविशेषः । ४ प्रेमातिशयः ।



परिधापयितुं रहः सखी नवशाटीमथादिव्यकञ्चुकीम् ।
यतते यदि तां तदैव सा स्मितसाच्याननवारिजाऽभवत् ॥७॥

अपि च ।

बालानां कृष्णताप्तिः श्रुतिशिखरपरीरम्भणं रागिदृष्टे
रागाक्तस्याधरस्य द्विजविशदरुचिस्थैर्यपात्रत्वलाभः ॥
वक्षस्यौन्नत्ययोगः स्फुरति सरलगोर्वक्रता चित्रमेतद्गौर्या बाल्ये व्यतीते चरणचपलतां मध्यपुष्टिं च नीत्वा ॥८॥

श्रवणं च रतिकटाक्षः कामो मननं रतिर्निदिध्यासम् ॥
वक्षःसाक्षात्कारं गौर्या ब्रह्मातये चित्रम् ॥ ९ ॥

इष्टिरिव मादिकेयं सौत्रामणिरत्यमोघशक्तिरिव ॥
मन्ये विजयिजयार्थं कर्णं यातास्युमादृष्टिः ॥ १० ॥

किंच ।

कनकल्पलतां गिरिजां शनैरुपगतं तदभूदपरं वयः ॥
यदिह मध्यममप्यतुलोत्तमं तदितरत्तु नयाति न तिष्ठति ११

अहो किं वाच्यमस्यावयःसंधिवैचित्र्यं यदि लुब्धकेतरप्राणिनां श्रवणमात्रेणैव मौक्तिकमहाकञ्चुकप्रदमानन्दोदाबिन्दुमान्दिरतासुन्दरनयनेन्दीवरद्वन्द्वकरं च ।

श्रुतिं प्रति गतागतं चरति लोचनं बाल्यव-
त्कुचाविव गुरुश्रियौ प्रयततो नितम्बौ मुहुः ॥
पदोश्च नलतात्ययः प्रतिलवं तु वाण्यां यथा
सहायविरहात्कृशः किमु तदीयमध्योऽभवत् ॥ १२ ॥

बाल्यं प्रोन्मूल (ल्य) राज्यं स्वयमनुभवितुं मारवीरेश्वरेण
तारुण्यं यन्नियुक्तं स्वपटुभटतया तेन तन्वी पृथिव्याम् ॥

१ वक्षःस्थलस्य । २ सरलदृष्टेः । ३ कर्णप्रति ऐते न वैशाल्यं चाञ्चल्यं च ध्वन्यते । ४ सहायाभावात् कुचौ द्वौ नितम्बावपि तथेति सहायाभावात् ।

एतस्यां हैमवत्यामुपगतमथ वा नेति संप्रष्टुमेव
श्रोत्रं प्रत्येति दृष्टिर्भटभयचकिता किं कुरङ्गीक्षगायाः १३
नितम्बो वक्षोजाविति च परचक्राण्युदभव-
न्न बाल्यं हा बाल्यादपसरति हैमाचलभुवः ॥
इति क्षीणो देशः किमयमभवन्मध्यमतया
स काञ्चीदेशस्तु प्रथिमदृढतामेव भजते ॥ १४ ॥
नीरः कोरकितं दृशौ न वलितौ नो भ्रूयुगं चाततं
नास्या व्याकुचितं वचो न सुरुचो वीचिप्रचाराञ्चितम् ॥
नो मध्योम्बरतां नितम्बयुगुलं नैवाद्रितं नो गति-
र्मन्दत्वं च जगाम यद्यपि तथाप्येषा तु विश्वाधिका ॥१५॥

एवं तद्वयोवस्थामालक्ष्य तद्रहःसख्यः स्वमनस्येवं तर्कयन्ति स्म।

वदनकमलं मन्दंमन्दं विकासमभीप्सति
श्रुतिमनुसृतौ प्रष्टुं धर्मं विलोचनखञ्जनौ ॥
चरति परितः काचित्कान्तिर्जनेक्षणतोषिणी
तदिह भविता नूनं श्लेषोद्यमः स्तनकोकयोः ॥ १६ ॥
कटाक्षमधुपावलिर्बहुगतागतानीहते
मुखाम्बुजमनुक्षणं विकसनोन्मुखं लक्ष्यते ॥
कचोतिमिरसंयमे रुचिरुदेति काचिच्चिरं
तदत्र न बभूव किं तरुणिमारुणस्योदयः ॥ १७ ॥
किंच नाद्यापि सैकतविहारशिलासुतादि-
क्रीडारसादुपरतिं भजते तथापि ॥
मन्दं तु गच्छति वचांस्यमृतानि वक्ति
वक्रं च पश्यति ततो विशयो महान्नः ॥ १८ ॥

१ परस्परमेलनोद्योगः । २ स्तनचक्रवाकयोः । ३ संशयः

अथ कदाचिदुमैव सखीः प्रति स्ववयःसन्धिसंदिहाना समपृच्छत् ॥

यो जातो जडिमा[1] हिमभ्रमणतः पादाब्जयोः सोस्तु मे
यः श्रोण्योर्गरिमा तथैव महिमा वक्षोजयोर्दृश्यते ॥
एवं लोचनचञ्चरीकमिथुने यस्तर्क्यते दीर्घिमा
यो मध्ये त्वणिमापि केन सखि मे जातः स इत्युच्यताम् १९

तथा तदानीं तत्रतत्र तस्याः समभूद्भ्रान्तिशतमपि । तथा हि ।

कस्मिंश्चित्स्फटिकमये विलोक्य शृङ्गे
स्वास्यैकप्रतिफलनात्तदीयरूपं ॥
राकेशः समुदयमागतोयमेव
सोत्साहात्स्वसहचरीः समादिदेश ॥ २० ॥

अथ कदाचित्स्वपितुर्ब्रह्मलोकान्तोच्चत्वेन तद्दत्तशापसंजातनदीरूपां स्वज्येष्ठां कुटिलाख्यां हैमवतीं गङ्गां प्रति सखीभिः सह स्नातुमगात् ।

निमज्जन्ती तस्यां सरसिजधियाऽऽस्यैप्रतिकृतिं[2]
निरीक्ष्यादातुं तत्प्रयतनरतासीद्गिरिसुता ॥
तथाप्यस्यालाभादतुलविकलाकूलगतिभि-
र्निजालीभिः स्वैरं समुपहसितापि क्षणमभूत् ॥ २१ ॥

करपुटजलमाचमनाय सा समुपृपद्य जहौ च मुहुर्मुहुः ॥
नयनमीनयुगप्रतिभानतः प्रकुपिताथ चचार तदञ्जसा ॥ २२॥

गच्छन्ती हिमगिरिभूमिषु प्रकामं
पादाग्रे स्थलकमलभ्रमेण भूयः ॥
एकान्ते कतिकति वा न वञ्चितासौ
ताभिश्चाप्युपहसिता सखीसमाजे ॥ २३ ॥

---

१ जडत्वम् । २ मुखप्रतिबिम्बम् ।

एवं सा भगवती हैमवती तदानीमन्यानपि सामान्यतः सकललोकान्विशेषतश्च प्रियसख्यानपि भ्रामयति स्म ।

तद्यथा ।

हस्ते मौक्तिकसान्द्रकन्दुकमसावादाय खेलातुरा
काप्यास्तेति विलोक्य तां प्रियसखी दूरादलं प्रार्थयत् ॥
मह्यं देहि सखि त्वदीयकरगं तं कौस्तुभं लघ्विति
त्युक्तेस्मिन्नथ सा चुकोप कपटं किं तेपि युक्तं न्विति ॥ २४ ॥

हिमाचलगुहामुखे क्वचिदिमां सखीं दूरतः
समीक्ष्य ताडिदागमभ्रमभरादधावद्गृहम् ॥
तयाथ कलनिस्वनैः सपदि तार[1]माकारिता-
प्यगान्न किल काकलीयमिति कोकिलानामसौ ॥२५॥

किं च ।

तन्मङ्गलस्नानविधौ जनन्याः सुरद्रुमेभ्योप्युप[2]ावमानान् ॥
भृङ्गव्रजान्वारयितुं समन्तादायास एवास महान्ससख्याः २६

प्रदोषसमये क्वचित्तुहिनशैलपुत्र्या तया
स्मिते विरचिते ययावपि चकोरपङ्क्तिः पुरः ॥
अभूच्छशिमणिव्रजेष्वपि रसोद्गमः कौमुदी
चकार कुमुदाकरेष्वपि विकासमास्येन्दुजा[3] ॥ २७ ॥

अपि च ।

वदने चिकुरेषु[4] नेत्रयोः करयोः पादयुगे च सा क्रमात् ॥
कमलामिव रक्तवारिजभ्रमया तैरलिभिः समाकुला ॥ २८ ॥

किं जङ्गमा कनकवाल्लरियं स्थिरा वा
सौदामनीति न कदापि विनिश्चयोभूत् ॥

---

१ गम्भीरस्वरेण । २ सूक्ष्मध्वनिः । ३ आस्यचन्द्रोत्पन्ना । ४ मस्तककेशेषु ।

प्रालेयशैलतनयाविषये जनानां
तां पश्यतां क्वचिदहो तदधित्यकायाम् ॥ २९ ॥

अथ भगवत्याः पार्वत्याः किञ्चित्कालेनैव तस्याः समविरास किमिदमनुरागारुणस्य मूर्तिमदारुण्यं दक्षमखसंत्यक्तदेहायाः सत्याः सकलदक्षकुलकलिपतशोकसंतापस्य भगवतः शङ्कराख्यस्य निसर्गकरुणस्यैव किं वा कारुण्यं तारुण्यं नाम वयः । तदा तु ।

तत्पादद्वयनिर्जितं स्वसदनं पद्माख्यमित्याकुला
पद्मासीद्धारिपादसेवनपरा सोपि प्रसन्नोपि तत् ॥
पाणावेव दधार सान्त्वनभिया नान्यद्विधातुं क्षमः
को वाभीप्सति तद्दृढत्वघटनं यद्वद्यया तुच्छितम् ॥३०॥

गौरीपदानुकरण बहुतीर्थवासा-
द्धंसालितृप्तिकरणाद्रजनौ समाधेः ॥
भानोरुपासनवशाच्च करोति किंचि-
त्पद्मं तदेव तत एव रमैति सद्म ॥ ३१ ॥

यदीयगतिलिप्सवः परमहंसतामागताः
सदाऽमृतनिषेविणो बिसभुजश्च मुक्तादनाः ॥
तथापि कवयोभवन्न तु गतिं रसं वाप्नुयुः
क्व तद्गिरिसुतापदं नरपशुः क्व वा मादृशः ॥ ३२ ॥

आम्नायाभिधकल्पशाखिशिखरोत्तंसीभवत्पल्लवा-
स्तन्मात्रैकरतैरतीव विरतैर्भक्तैस्तु यत्रार्पिताः ॥
तेनैते सफलाः स्वसार्थकतया सद्यो बभूवुः कथं
तद्गौरीचरणाम्बुजद्वयमये किं वर्णयेन्मादृशः ॥ ३३ ॥

यन्मुक्तिबोधबुधमानसहंसयूनो-
र्नीडत्वमेति मुनिचित्तपरागरम्यम् ॥

१ हंसाः संन्यासिनः पक्षिविशेषाश्च । २ निराहाराः मौक्तिकभक्षकाश्च ।

वेदान्ततत्त्वमकरन्दपरिप्लुतं त-
त्कोवर्णयेद्गिरिसुताङ्घ्रिसरोजयुग्मम् ॥ ३४ ॥
मन्येऽयं वरबुधमानसानुरागः
सम्भूय प्रसरति पादयोस्तलेस्याः ॥
सौरभ्याधिगतिविलोभनेन यस्मा-
ज्जातस्तन्नखवपुषा शशी दशात्मा ॥ ३५ ॥
शङ्के पङ्केरुहनिवसनात्केसरास्त्रासमाप्य
गौरीपादाम्बुरुहयुगुले चाङ्गुलीत्वेन जाताः ॥
यस्मिंश्चिन्तामणिगणमहाभूषणैर्भूष्यमाणाः
संसेव्यन्ते त्रिदशरमणीकेशवृन्दैर्मिलिन्दैः ॥ ३६ ॥
यदुपसरणतोपि पद्मरागो भवति शिलांशलवोपि सद्य एव ॥
व्रजति विषयतां क्वचित्कदाचित्तदलमुमाग्रपदं कथं नु वाचाम् ३७
मणिक्यमञ्जीरयुतावुमाया गुल्फौ स्वपार्ष्ण्योः किमुतौ विभेत्तुम् ॥
सारस्वतं शिक्षयतः स्वलीलाविलासगत्याध्वनिसारमुच्चैः ॥ ३८ ॥
लब्धा हैमवतीपदाब्जवसतिं किं नूपुरौ तत्क्षणात्
नानाशिञ्जितमञ्जुलध्वनिवशाद्यातौ तुलाकोटिताम् ॥
सङ्गीतं मृदुवल्लकीध्वननतः सानन्दमुच्चैः कलै-
र्गायन्तीमपि भारतीं तृणयतः का सारिकादेः कथा ॥३९॥
पित्रा तुषारगिरिणा निहितौ तदीये
पादद्वये मणिमयाविति हंसकौ किम् ॥
एतत्समागमवशात्किल किंचिदस्या-
स्तत्स्यात्कठोरमथ तत्तु तदन्तरेव ॥ ४० ॥
हंसाः सूर्यमरालजीवयतयः सर्वेपि मत्तः सुखं
यान्त्वेवं विरुदच्छलेन पदयोर्या बिभ्रती हंसकौ ॥

---

१ पादाङ्गुल्यलङ्कार विशेषत्वेन 'विरोद्या' महाराष्ट्रे प्रसिद्धम् ।

तस्मादेव तदाकृतीनि कमलान्यानन्दयन्त्यंशुमा-
न्नोचेत्ते गमने कुतः स्फुटयतो हार्दानुरागं बहिः ॥ ४१ ॥

सौवर्णे सुललितशृङ्खले धृते स्त-
स्तत्पद्भ्यां स्वतलगतोर्ध्वरेखया यत् ॥
स्यादूर्ध्वं किल परमेश्वरादपीदं
मानादाविति गदितुं तदेकदर्पात् ॥ ४२ ॥

अनधिकार्यपि काञ्चनकेतकीकनकचम्पककुड्मलमेव यत् ॥
अनुकरोति तदीयसुजङ्घयोरिति हरेण तदुज्झितमीक्ष्यते ॥४३॥

हरकरकरभौ विना तदूर्वोरुपमानं किल नो जगत्त्रयेपि ॥
यदिह हाशु सुखं समेष्यतस्तौ खलु तत्स्पर्शनजं न कोपि चान्यः ४४

यस्या ऊरुयुगश्रिया हृतमदा सान्तत्यशैत्यादिना
जाता वैत्ररथीयहेमकदली हेमाधिनाथस्नुषा ॥
रम्भाथापि न पारमा पतदलं दुःखेन दग्धागमत्
प्राणांस्त्यक्तुमुदन्वदम्बुनि परं तेनाप्सरस्त्वं गता ॥४५॥

ऐरावतोपि च यदूरुजितस्वशुण्डो
ब्रह्माण्डमण्डलमखण्डमिदं विविच्य ॥
आखण्डलं शरणमेष जगाम सद्य-
स्तत्रापि चाङ्कुशविदारितमस्तकोभूत् ॥ ४६ ॥

विना न रोमालिमसौ बभार जङ्घादिषु क्वापि तनूरुहाणि ॥
तेनैव रोमावलिवर्णनाय किं सुन्दरीणां कवयः प्रवृत्ताः ॥४७॥

सूत्रात्मत्वमुपेत्य सद्गुणतया यावत्सुवर्णात्मकै-
र्नानारागपरारुणादिशबलैः कृष्णार्जुनाद्यैरपि ॥

---

१ केतकीपुष्पं सुवर्णचम्पकपुष्पं च शिवपूजायां निषिद्धमिति प्रसिद्धमेव
२ अप्सु सरन्ति गच्छन्तीति अप्सरसस्तद्भावः अप्सरसः स्वर्गाङ्गनाः ।

चित्रत्वं समवाप्य पञ्चभिरलं सौगन्ध्यमुख्यैः पुन-
र्धर्मैर्युक्तमतस्तया परिहितं गौर्या दुकूलं महत् ॥४८॥

तस्या अराङ्मनसगोचरमद्वितीयं
स्वानन्दमात्रनिलयं च शिवैकगम्यं ॥
आच्छादितं सततमम्बरमुख्यदृश्यै-
र्ब्रह्म स्वयंरुचि महज्जघनं घनोच्चम् ॥ ४९ ॥

क्षुद्राभिः किङ्किणीभिः स्वनमधुरिमकामेखलापद्मराग
व्राताढ्या यत्र दीप्यत्कनकमयपटादूर्ध्वबद्धा विरेजे ॥
पौलोमीनाथचापव्रततिरिव घनोद्भासिभाधित्यकायां
मेरोस्तुङ्गन्नितम्बा जयति कनकरुक्सा कटिः शैलपुत्र्याः ॥५०॥

त्रिपुरहरजयैषी निर्ममे मन्मथः किं
जघनरथमुमायास्तन्नितम्बद्विचक्रम् ॥
कनकमयमपूर्वं रत्नकाञ्चीद्वचापं
कुसुमललितबाणश्रोणितूणीरपूर्णम् ॥ ५१ ॥

रोमाली स्मरसुरचारुकारुणास्याः
सौन्दर्यामृतयुतमार्गनाभि नैव ॥
एतावच्छिववपुषा सहास्ति योज्यं
रेखैवं बत लिखिताणुमध्यमध्ये ॥ ५२ ॥

अद्याप्येतदुपैति नैव सुरतं सीमन्तसिन्दूरभाः
प्रोन्मीलद्वदनारविन्दविलसन्नालान्तिके गृह्यपि ॥
एतस्याः स्तनकोकनूत्नमिथुनं कस्मादिति क्रोधतः
काञ्चीचापनियोजितः किमु शरः कामेन लोमावलिः ५३

---

१ स्वप्रकाशम् । २ इन्द्रधनुरिवेत्यर्थः ।

नदीत्वं गंगासा यत इह निजज्येष्ठभगिनी
जगत्पावित्र्यार्थं तदनुकुरुतेसावपि तनौ ॥
महावर्तं नाभिं त्रिवलिमपि लावण्यलहरीं
स्तनौ धत्ते कोकौ मुखमपि सरोजं गिरिसुता ॥ ९४ ॥
मदीयमवलग्नकं कनकपद्मकोशाकृति
सुवर्णवसनोल्लसन्मदनधान्यधान्यात्मकम् ॥
बभार कुचकाञ्चनाचलयुगस्य भारादधो
वलित्रयमिदं जगत्त्रयपकृष्टनेत्रत्रयम् ॥ ९५ ॥
सौन्दर्यबाजं जगतीतलस्थं यावत्तदेकत्र विधाय मातुम् ॥
सौवर्णमादाय तदीयमध्यं प्रस्थं तदासीत्किल तावदेव॥९६॥
स्मरस्तटस्थस्तत आसनेन मत्वात्मसर्वस्वमरक्षदेतत् ॥
कुतोन्यथा तत्र वली सदैव स्वयं त्रिधारूपधरः स्थितोस्ति९६
अपि च
नाभिस्तदीय इदमाहवनीयकुण्डं
रत्या जुहोति सह तत्र किमग्निहोत्रम् ॥
कामो गृही सततमध्यमवेदिकास्थो
धूमोत्र रोमलतिकापि हितौ कुचाग्नी ॥ ९८ ॥
यत्कार्ये किल गुणजालमारभन्ते
हेतुस्थाः सकलगुणा इतीज्यमेतत् ॥
यज्जातौ कुचकनकाचलावुरस्तः
प्रालेयाचलदुहितुर्विचित्रमेतत् ॥ ९९ ॥
कुचकाञ्चनपद्मकोरकावलिसंघावलिताननाविह ॥
हरलेप्युकुरङ्गनाभिताध्वनयन्तौ ध्रुवमात्मजन्मतः ॥ ६० ॥

---

१ मध्यः। २ युग्ममेतद्।

बिल्वः कण्टकितः शिवप्रियतमोप्यस्याः स्तनश्रीक्षणा-
द्वृन्तादेव फलं पपात सहसा चूतस्य पाकेप्यलम् ॥
प्रोद्भिन्नं हृदयेपि दाडिममभिव्यादाय वक्रं वटौ
रौक्मावप्यभिजग्मतुर्विरसतां कुम्भीन्द्रकुम्भौ क्वचित् ॥ ६१ ॥

हेमाचलोचलसुताकुचनिर्जितत्वा-
त्खिन्नः समाधिमकरोत्किल भूरिकालम् ॥
तेनाप्यकार्मुकतया हरहस्तसङ्गं
किं रत्नसानुरभवत्स सुरालयश्च ॥ ६२ ॥

रतितत्पतिहीरकन्दुकौ भवतो हैमवतीस्तनाविमौ ॥
कुरुतः कषणं परस्परं मणिकूर्पासकरोधितावपि ॥ ६३ ॥

गजेन्द्राणां कुम्भस्थलजनितमुक्ताभिरभितो
गुणित्वं प्राप्यास्याः स्तनयुगुलहारत्वगतितः ॥
जितानामेतेन स्वपितृचरणानामनृणतां
गतं किं वासाध्यं यदि भवति चेदुक्तगणिका ॥ ६४ ॥

कारुण्यादपि निजसोदरत्वतश्च
सा कण्ठे किमु निदधाति रत्नमालाम् ॥
मुक्तानामपि च तथैव देवछन्दं
तद्भूषा क्व बत भवेद्विनाङ्गमस्याः ॥ ६५ ॥

ग्रैवेयकं मणिमयं समवाप्य तस्या
ग्रीवामवाप बत सार्थकनामतां च ॥
कान्यत्र तस्य भविता भुजसाहचर्यं
शंभोः समुद्रतनयागलयोगतोपि ॥ ६६ ॥

कुरुविन्दमैन्द्रनीलहीरैरपि वैदुर्यहरिन्मणिव्रजैश्च ॥
रचितां सुललन्तिकामुरोजाद्वितये सादधदेतदेकभूत्यै ॥ ६७ ॥

---

१ कण्ठस्थालङ्कारम् ।

यत्पादपद्मस्य परागमेव नमन्ति संघाः सुरपद्मिनीनाम् ॥
तदीयबाह्वोरपि रौक्मपद्मनालत्वमाहुः कवयो विशृङ्खलाः[1]॥६८॥
अनुरागमृणालिनीमृणालप्रकृतिं त्र्यम्बककण्ठकर्षणार्थम् ॥
रचितं मदनेन पाशजातं भुजयुग्मं ध्रुवमद्रिकन्यकायाः॥६९॥

शिरीषबिसकेसराधिकमृदुत्वलक्ष्मीजुषो-
र्भविष्यति कथं न्वदः खलु तदीयदोष्णोर्बलम् ॥
विधेयमिह येन तु द्विपषडाननाकर्षणं
तयोर्वितरितुं स्तनस्नुतपयोमृतं तौल्यतः ॥ ७० ॥

याभ्यां शम्भोर्गलोसौ भुजगपतियुतः कालकूटान्वितोपि
श्रीसंयुक्तः सुशीतः सततमुदयतो येन शीतैव तद्वाक् ॥
मुक्ताभिर्हीरकाद्यैर्मणिभिरपि तयोरङ्गदाद्यैर्विभूषा
गौरी बाह्वोरियं तु व्यवहृतिपदवीपालनायैव नूनम् ॥ ७१ ॥

तस्याः प्रकोष्ठौ यदि हेमकेतकी
पीयूषदम्भो नवनीततामियात् ॥
तत्रापि तस्या नवकोरकौ पुन-
र्निष्कण्टकौ चेद्भवतोनुयाताम् ॥ ७२ ॥

सुरमणिवलयालीकङ्कणे चापि नाना-
विधमणिगणयुक्तं धारयन्तौ तदीयौ ॥
कथमिहमणिबन्धौ शिञ्जितैर्नोपयातां
मृडहृदयमृगस्याकर्षणादौ पटुत्वम् ॥ ७३ ॥

यौ पादाम्बुजयोः शिवस्य चरतः षड्वक्त्रहेरम्बयो-
र्मौल्योराननयोश्च पृष्ठतलयोर्विष्णोर्विधोश्चाभये ॥
लक्ष्मीसद्मतया समाहिततया रात्रौ च गङ्गादिना
तीर्थानामवलम्बनेन च तयो रक्तोत्पले किं तुला ॥७४॥

---

१ स्वतन्त्राः ।

मसृणतारुणतापि च पार्वतीकरयुगस्य यदैव विलोकिता ॥
सपदि कोकनदेन तदा ह्रदे गतमभूदसुनाशनहेतवे ॥ ७५ ॥

रत्नाङ्गुलीयनिचयेन सुशोभमाना-
स्तस्या दशाप्यतुलमङ्गुलयोभिरेजुः ॥
गौरीपदाहतिविकासजुषोस्य शोको
मास्त्वित्यशोकमुपचक्रुरपि स्वलक्ष्म्या ॥ ७६ ॥

हिमशैलसुताकराम्बुजद्वयशाखानखकौस्तुभैः किमु ॥
महदाश्रयतो निजानने सततं बालशशित्वमाश्रितम् ॥७७॥

पिनद्धं कञ्चुक्या विविधमणिमय्या तदुपरि
स्फुरद्धारश्रेण्या तदुपरि दुकूलाञ्चलमया ॥
सुवृत्तं ब्रह्मेव त्रिभिरलमवस्थाभिरभितः
कुचद्वन्द्वं तस्याः प्रविकचाति दोर्द्वन्द्वमपि च ॥ ७८ ॥

निसर्गनम्राननया तया गले मध्यत्रिरेखाप्रतिबिम्बमासम् ॥
उतास्य तत्रेति विनिर्णयस्तु केनापि कर्तुं बत नैव शक्यः ७९

त्रैकालिकसौभाग्यं त्रिजगति जयाति त्र्यवस्थमत्रैव ॥
इति सूर्यस्त्रिरेखो मङ्गलसूत्रासुत्पुरैव तत्कण्ठः ॥ ८० ॥

दधार ग्रीवायां ललितनवरत्नावलिमसौ
न भूषार्थं किंतु स्वरुचिबिरुदार्थं त्वचमिव ॥
मयैव श्रीशम्भोर्जगति बत भक्तिर्नवविधा
विधेया नैवान्यैरिति गुरुगिरद्भवगरिमा ॥ ८१ ॥

उपास्त इव गीष्पतिश्चिबुकछद्मना नीचतां
गतस्तदधरादपि ध्रुवमयं तदीया गिरः ॥
चिरं सुरतराङ्गिणीचरतरङ्गभङ्गप्रदं
तदीयममृतोपमं रसमवाप्तुमासारतः ॥ ८२ ॥

---

१ शोणं कमलम् ।

सद्वृत्तः सरसो गुरुः स्वगुरुतामुद्घास्य तस्या हनु-
र्भूत्वा नीचतयाधरादपि वसन्नङ्के मुखेन्दोरपि ॥
शब्दब्रह्मनिधे त्वमेतुमनिशं प्रायो बहिर्दुर्लभा-
मन्तेवासितयैव तद्गिरमसावासेवते निश्चलः ॥ ८३ ॥

कृत्वा लावण्यदुग्धं विमलघनदधिस्फीतसंस्कारयोगा-
न्निर्मथ्यैतत्प्रयत्नाद्रतियुवतिरिमौ गोलकौ नावनीतौ ॥
उद्दध्रे तत्कपोलावथ शुचि निदधे तन्मुखस्वर्णपात्रे
शम्भोरेवातिभक्त्यार्पयितुमतितरां चुम्बनास्वादनार्थम् ॥८४॥

ओष्ठस्तस्या रागीत्यधर इति व्यर्थमूहनं विदुषाम् ॥
यदयं श्रितद्विजेन्द्रः सारस्वतसारशाल्यमृतरूपः ॥८५॥

रूपात्मोदयशैलमौलिगमणिः पीयूषरूपोरुणः
शङ्केस्या अधरो यतोम्बरमयं शोणं स्वभासाकरोत् ॥
किंचास्येन्दुमपि क्वचित्सुविलसन्मुक्तालितारागणं
तद्वत्सन्तनुते विषार्तिहृदपि श्रीशम्भुरेतद्रसात् ॥ ८६ ॥

जित्वा शुकं स्वसुषमानिचयैर्यदीया
नासाऽहरद्धनममुष्य तु रागरूपम् ॥
तन्नीचमित्यधरतामनयत्ततोसौ
जातो दिगैकवसनोतुलवीतरागः ॥ ८७ ॥

द्विजराजमिदं तिरस्करोति स्वरुचास्या वदनं ततो द्विजानाम् ॥
शरणं पुनरेतदेव नान्यत्क्वचिदित्यल्पतनूस्स्वयंप्रकाशान् ॥८८॥

विधिवेदचतुःसनाङ्कयोगिद्विगुणितसप्तमहामुनिद्विजाढ्यान् ॥
शरणं समुपागताननन्यं करुणाशालि तदन्तरे विदध्रे ॥ ८९ ॥

विनैव ताम्बूलनिषेवणेन शोणा तदीया रसना निसर्गात् ॥
शिवाधरीयामृतपानलोभात्सितापि वाग्देव्यनुरागिणीव ॥८९॥

---

१ एकान्वयीदं श्लोकद्वयम् द्विजेति विधीति च । २ स्वभावतः ।

विपञ्ची[1] पश्चत्वं व्रजति पिककान्ताश्च विपिनं
प्रयाताः स्ववेश्याः क्व किल गणनीयाः समभवन् ॥
यदासौ वाग्देवी जडवपुरुपाकर्ण्य सहज-
स्वनं तस्या आसीत्किमुत बत गीत्यादिकलने ॥ ९१ ॥

स्मेरस्तु[2] तस्याः स्मरसार्वभौमयशःपयोराशिषत्प्रचारः ॥
मन्ये स्वजातामृतवीक्षणार्थी भूयस्तदीयाधरबिम्बमेति ॥ ९२ ॥

कवयो जडाः किल वन्दाति यतो
गिरिजाधरस्य बत बिम्बतुलाम् ॥
किमु तैस्तदेव बहुधास्त्यशितुं[3]
कथमन्यथा खलु वदेयुरिति ॥ ९३ ॥

यः सर्वज्ञशिखामणेरपि महासम्प्रार्थनैस्तृप्तये
कौमारेरपि[4] नित्यतृप्तवपुषो भूम्नोपि साक्षाद्भवेत् ॥
येनैवामृतमप्यनारदपदं गौर्यास्तमेवाधरं
ब्रूयात्पल्लवबिम्बविद्रुमसुधातुल्यं मुधार्को बुधः ॥ ९४ ॥

हरप्रियकरस्तिलस्तिलसमस्वकस्नेहभा-
गतोस्य कुसुमं समं किल तदीयया नासया ॥
परं यदि हिरण्मयं प्रमथनाथकारुण्यतो
भवेन्न तु परा तथा कथयितुं कथं चित्कंचित् ॥ ९५ ॥

शनिस्थाने शून्यं लिखति किल कालज्ञानिकरः
परं त्वस्मिन्बीजं न वदाति मया तूच्यत इदम् ॥
यदेतस्या इन्दुर्मुखमरुण एवास्ति तिलको
हनुर्जीवो नासाभरणमणिसौम्यारकवयः[5] ॥ ९६ ॥

श्रुती तदीये रतिमन्मथाभ्यामङ्गीकृते स्तः किमु हेमपाशौ ॥
निरीक्षणादेव पतिं पशूनां क्षणादुपाकर्षयितुं विचित्रौ ॥९७॥

---

१ तन्त्री । २ हास्यम् । ३ भोक्तुम् । ४ शिवस्य । ५ बुधमङ्गलशुक्राः ।

तत्ताटङ्केर्कनिभे रतिमदनाभ्यां सुदर्शने कलिते ॥
अन्वर्थनामके किं जेतुं शिवमपि च दर्शनादेव ॥ ९८ ॥
पूर्वोत्तरमीमांसे कपोलपालीमते तस्याः ॥
प्रतिबिम्बिते ययोः स्तः साङ्गोपाङ्गे श्रुती नितराम् ॥९९॥

नानारत्नसुवर्णमौक्तिकमहालङ्काराचित्राम्बरौ
श्रीदौ संश्रुतकिन्नरीजनलसत्तौर्यत्रिकोद्यद्भवौ ॥
जातौ पद्मयुतौ च पुष्पकचिराभूषालकालम्बिनौ
तस्या वैश्रवणौ[1] त्रिनेत्रसखिताद्वैगुण्यलाभाय किम्॥१००॥

अपि चास्याः पर्वतराजनन्दिन्या दृष्टिस्तु तावदनुपमतामेवैति । यतः ।

एतज्ज्येष्ठाजलगजजुषां स्याज्झषाणां तु किञ्चि-
द्भाऽक्ष्णोरस्या मम जितवतोरन्त्यनीलोत्पलेषु ॥
इत्येवायं मदनविजयी न्यस्य नैजध्वजे तं
मीनं धन्यो भवति जगतीं किङ्करीत्वं नयन्सन् ॥१०१॥

निजाङ्के सारङ्गं निवसयति चन्द्रः करुणया
तदाक्षि श्रीलेशादपि परमभीभ्रामितदृशम् ॥
चकोरानप्येवं सततपरितप्ताङ्घ्रिशिरय-
त्यसौ संरक्ष्यैवामृतमपि तदीयस्मितजितः ॥ १०२ ॥

किं च ।

तन्नेत्रगाञ्जनरजोलवनिर्जिताभ्यां
हा यौवनेपि खलु खञ्जनदम्पतीभ्याम् ॥
अन्विष्यते निधुवनाय निधीद्धभूमि-
र्जय्या कदापि कुलसन्ततिरस्तमेति ॥ १०३ ॥

क्व तदीयदृशौ सदा विकासाद्धिमराशेरपि सङ्गमैः सुतोषात् ॥

---

1 वै-श्रवणौ इति छेदः । वैश्रवणः कुबेरो वा ।

क दिवा शयितं सहैव घूकैर्हिमनष्टं च सुनीलमप्यदोब्जम् १०४

मुमुक्षुक्षोभाद्यक्षपणभवनायैव विधिना
प्रयागौ[1] तन्नेत्रे रतिमदनयोरेव रचितौ ॥
तयोः स्पष्टं रूपं सितमसितमारक्तमपि च
त्रिमार्गा कालिन्दी द्रुहिणतनयानामिव यतः ॥१०५॥

दग्ध्वा स्नेहदशां[2] यदीयजननं दीपेन सम्पादितं
भुक्त्वा चापि तमः कथं नु मलिनं जातं तदप्यञ्जनम् ॥
इत्याशङ्कनशान्तये कलयतस्तल्लोचनस्वात्मनि
स्याद्येनास्य तु कामकारणतया श्रीकृष्णतैव स्फुटा ॥१०६॥

श्रुत्यन्तसंकलनलौल्यबलेन तस्याः
सञ्जातमीक्षणयुगं किल सार्थकाह्वम् ॥
यत्पर्यवस्यति शिवैकविलोकनेन
स्वानन्दसुन्दरमरन्दमहारविन्दम् ॥ १०७ ॥

अपि चालौकिक्येवं तत्कटाक्षच्छटा । तद्यथा ।

श्रुत्यन्तैः श्रवणं करोति शतधा नृत्याच्च सङ्कीर्तनं
रागेण स्मरणं पदक्षणरसात्पादाब्जसंसेवनम् ॥
लेशैरर्चनमान तश्च नमनं दास्यं तदन्वीक्षया सख्यं
प्रेमभरान्निजार्पणकृते गौरीकटाक्षः शिवे ॥ १०८ ॥

किं च ।

शम्भोः पादाब्जयुग्मे यदिह भगवता स्वर्पितस्वाक्षिपद्मं
तत्किं नेत्रालिमाद्यन्मिथुनतनुवदास्वादनायावतीर्णम् ॥
गौर्या वक्त्रारविन्दे मधुकृतिपिबनास्वादनादिव्रतेन
दोषाभासानपीदं क्षपयितुमनिशं श्रुत्यपान्तं प्रयाति ॥१०९॥

---

१ प्रयागः गङ्गायमुनासरस्वतीनां सभेदः । २ स्नेहं तैलं दशां वर्तिकाम् । पक्षे स्नेहदशां मैत्र्यवस्थाम् ।

उपेतापि फुल्लारविन्दभ्रमात्त-
न्मुखामोदलुब्धा विमुग्धालिमाला ॥
कटाक्षच्छटाभिस्तदीयाभिरेव
भ्रमत्तुङ्गभृङ्गभ्रमादेव याति ॥ ११० ॥

अन्यच्च ।

तरुणिमगुणारोपान्नम्रे तदीयलसद्भ्रुवौ
पुरविजयिनं जेतुं नूनं नवीनशरासने ॥
रतिमनसिजौ द्वावप्येतौ विकृष्य शिवं विना
किमपि तदपाङ्गेष्वोर्लक्ष्यं न चक्रतुरञ्जसा ॥ १११ ॥

चित्रीकर्तुं तत्कपोलौ सखीभिः कस्तूर्यैव प्रेमतोभिप्रवृत्तम् ॥
दृष्ट्वा तत्र प्रोदितं तत्कटाक्षैर्भूयश्चित्रं कान्तिजालं निवृत्तम् ११२

उर्ध्वाधोन्तिमभागयोरतिसिता रक्ता तथा पल्लवे
मध्ये चार्वसिता गुणैकघटिता स्फीताखिलानां मता ॥
दीर्घा स्नेहसुघट्टितातिमृदुला वर्या रसोद्द्योतिका
तस्या दृष्टिरलं विमोहजनिका शाटीव रत्या नवा ११३

अपि च ।

किं नासातिलकुसुमीयवृत्तवल्लयौ
किं रूपद्रुमनवचारुमञ्जरीव ॥
लावण्यामृतजलराशिवीचिके वा
तारुण्यप्रथमदले भ्रुवौ तदीये ॥ ११४ ॥

नयनकुरङ्गे तस्या भ्रुवोश्छलान्निष्कलङ्कवदनेन्दौ ॥
प्रकृतेन्दुतुल्यतायै स्मरेण तापिच्छमञ्जरी निहिते ॥ ११५ ॥

काश्मीरचित्रकविचित्रललाटमस्याः
कस्यापि नैव विषयो वचसां विभाति ॥

---

१ कुङ्कुम चित्रैर्विचित्रम् ।

न्युब्जं च शारदमथो हृदि मङ्गलाढ्यं
स्यादष्टमीन्दुशकलं यदि तर्हि साम्यम् ॥ ११६ ॥

अष्टम्याः शशिभित्तं कृष्णार्जुनपक्षयोरपि सुतुल्यम् ॥
मन्ये तद्भालकलास्वनु कृतिपुण्येन परमगण्येन ॥ ११७ ॥

सौभाग्यचिन्तामणिशोणरत्नं तत्कौङ्कमं पातु विशेषकं नः ॥
येनेह भालानललोचनस्य कृतानुकारोपि तदैक्यलब्ध्यै ॥ ११८ ॥

बन्दीदाम्नाहीरमुक्ताङ्कितेन
रत्नभ्राजत्पत्रपाश्यान्वितेन ॥
तस्याः कान्त्युल्लासि भालं विशालं
द्रष्टुं लोके कस्य भाऽलं विशालम् ॥ ११९ ॥

हीरकमौक्तिकघटितं बन्दीदामाद्रिकन्यायाः ॥
तिलकालकद्युतिभ्यां प्रयागतामिन्द्रचापतां चैति ॥ १२० ॥

एवं चानिर्वाच्यैवास्याः परमाननस्य सुषमा । येन भगवानीश्वरोपि स्मितकटाक्षान्यतरस्वावयवलेशेनापि वशीकृतः । तथा हि ।

यस्योर्ध्वं चिकुराः स्थिरा मधुकराः फुल्लारविन्दोल्लसत्स्मेराधीरमरीचिके सरसुधामोदेद्धमध्वाशया ॥
नित्यं संनिवसन्ति संयमनतः संरोधिता अप्यलं
तद्गौरीवदनं मुदेकसदनं को वा कथं वर्णयेत् ॥ १२१ ॥

किं च ।

चकोराभ्यां यस्मिन्किल वसतिरेवाक्षिमिषतः
कृता तत्कौमुद्याः स्मितरुचिरपीयूषसुरुचेः ॥
सदैवास्वादार्थं तमिह मुखनिर्लाञ्छनविधुं
कवीन्द्रः पार्वत्याः प्रभवति च कः स्तोतुमधुना १२२

---

१ चन्द्रार्धम् । २ बिन्दीबिजोरा इम० भा० । ३ कान्तिः ।

न क्षीणोऽस्ति कदापि नैव तमसा स्वप्नेपि वाच्छादितो
नो देवामृतपानभाजनतया केनापि सम्भावितः ॥
शापान्नापि कलङ्कितो न च दिवा म्लानो न वा पाण्डुरः
कोप्येको जगतीतले विजयते गौरीमुखेन्दुः स्मितैः ॥१२३॥

अपि च ।

यदीयमन्दस्मितमात्रनिर्जितः क्षयी कलङ्की चिरपाण्डुरोगवान् ॥
प्रकाशयत्येष दिवा न वाननं सदैव निश्येव शशी भ्रमत्यलम् १२४

यस्याः पदैव हरिभूरिकृतप्रयत्ना-
द्यस्मै स्वलेशतुलितैव तु मास्ति दत्ता ॥
पद्मं कथं तदिहि तन्मुखसाम्यसद्म
स्यादास वास्त्यपि ततोनुपमं किलैतत् ॥ १२५ ॥

हरेण शिरसा धृतोप्यथ कथं नवा चन्द्रमा
उपैतु गिरिजामुखप्रातिभटत्वमित्यप्यसत् ॥
कलैव किल षोडशी चिति समास्यते नाहृता
तदीयचरणानताविहनखैकपूजार्थिना ॥ १२६ ॥

यदास्वादादेव त्रिपुरदहनस्तुच्छमकरो-
त्सुरैः साध्यं यत्नैरमृतमपि सर्वज्ञनृपतिः ॥
अपि त्रैलोक्यस्य क्षपणपरिदक्षं दुरतिगं
निपीतं तत्कालं तदपि गरलं तेन सहसा ॥१२७॥

अथ वा ।

अस्मात्संसारपाशात्कथमिह भविता हन्त मोक्षो जनाना-
मज्ञानाद्याकुलानामिति शिवकृपया ब्रह्मविद्यैव साक्षात् ॥
आविर्भूतास्ति गौरी तदमृतपरमानन्दमेवाद्वितीयं
ब्रह्मैवास्यं तदीयं स्वहृगुपशमदं तापहृत्स्वप्रकाशम् ॥१२८॥

१ चन्द्रः । २ लक्ष्मीः ।

एवं तच्चिकुरचमत्कारोपि वाचस्पतिवाचामप्यगोचर एव तथा हि ।

कालान्तसदातिकुटिलान्क्षणनीचगांश्च
सुस्नेहसंततनिषेवणतोपि बालान् ॥
साऽऽधत्तलोकजननी कृपयोत्तमाङ्गे
तेन स्युरीज्यसुमनोयमनोच्चमुक्ताः ॥ १२९ ॥
शिवो गङ्गामेव स्वशिरसि निदध्यादिति तया
धृतैषा कालिन्दी शिरासि कबरीभारमिषतः ॥
यतोत्र स्नेहाक्तानिव वसुरलं संयमनतः
सरागाः श्रीकृष्णे सततमपि मुक्ताः सुमनसः ॥ १३० ॥
वेणीमेषा यदिह तनुते कुन्तलैर्युक्तमेव
यस्मात्तस्या शिरसि कबरी भानुपुत्रीमुपेता ॥
गङ्गा मुक्तावलिरपि लसन्मध्यसिन्दूरलेखा
धातुः पुत्री ललितसुमनःसंयमस्नेहयुक्ता ॥ १३१ ॥

अपि च ।

निजप्रादुर्भावाद्दलितमखिलध्वान्तमगम-
च्छरण्यां कारुण्यामृतमिति च तामेव शरणम् ॥
तया तत्कालं तच्छिरसि निहितं केशमिषतो
विरोधात्किं चूडामणिदिनमणेरप्यनुदिनम् ॥ १३२ ॥
तस्या मस्तकविश्वमद्भुतमभूद्यस्मिन्कचाः कोटिशः
स्निग्धाः संयमिनः शताधिकमहामुक्तात्मशुक्रावलेः ॥
तां विद्यां सुमनःपरप्रियतया सम्प्राप्य सञ्जीवनी-
मीक्षामात्रवशादनङ्गमपि यत्सञ्जीवयन्त्येव ते ॥ १३३ ॥

---

१ देवाः पुष्पाणि च । २ यमुना । ३ ब्रह्मपुत्रानदी ।

ततश्च सापि तत्रत्यसकलसखीजनादिलोकानामलौकिकतया प्रतिक्षणमवश्यावलोकनीयत्वादनन्तोत्प्रेक्षणविषय एवाभूत् । तद्यथा ।

गेहेपि सञ्चरति विद्युदथापि भूमौ
तत्राप्यसौ स्थिरतरैव ततोपि धत्ते ॥
ऊर्ध्वालिमिन्दुमपि खं जनयुग्मयुक्तं
तस्याप्यधः कनकशैलयुगं विचित्रम् ॥ १३४ ॥

अपि च ।

किमु हिमाद्रिसमाधिपुण्यतः कनककल्पलतैव तु कन्यका ॥
अभवदाननफुल्लशतच्छदोन्नटदनङ्गमहोन्मदखञ्जना ॥१३५ ॥

अमृतलहरी किं स्यादेषा कथं बत शैलजा
भवतु तदपि प्रत्यक्षा सा कथं तरुणी पुनः ॥
तदपि न सुरैः पेया स्वप्नेप्यसौ जगदीश्वरं
भवभयहरं सर्वाधारं विना शशिशेखरम् ॥ १३६ ॥

हिमाचलरसालतः सकलविश्वपुण्योल्लस-
द्वसन्तसमयागमे समुदभूदियं मञ्जरी ॥
रसैकभरिता पुनः परिमलैः स्तुता सन्नता
शिरस्यलिकुलावृतापरभृताप्तिमालिप्सति ॥ १३७ ॥

अथ कदाचित्स्वैरचारी देवर्षिप्रवरो भगवान्नारदस्तामेतां हैमवतीं स्वपितुरन्तिके तिष्ठन्तीं विलोक्य तेन कृतातिथ्यः सुखासनोपविष्टश्च संस्तं प्रति भोभोः सकलशैलभूपाल प्रालेयाचल भवदीयेयं नेदीयसी कुमारी भगवतः सकलद्वैतेन्द्रजालोत्पत्त्यालीलस्य कलानिधिकलैकमालतीमौलेस्त्रिलोचनस्यैवालौकिकानुरागतः शरीरार्द्धतामप्यापद्यमानाऽनुपमवधूरेवोमा भवित्रीति कृत-

१ कोकिलमाप्तिम् परतः पोषणं च ।

म्भरा प्रभवतः करकलितत्रैकालिकवृत्तान्तः समादिशत् । तत

पुलकितसकलाङ्गी स्वेदमुक्ताकपोला
गलितवसनचोलग्रन्थिसुव्यग्रचित्ता ॥
प्रकृतिगजगतिः सा स्तम्भसुस्तब्धपादा-
प्यतुलविपुलयत्नैर्मातृसद्माविवेश ॥ १२८ ॥

ततः प्रभृति सा मनः शिवपदैकरूपं पुरा
भवस्मृतिवशा दृढं समकरोदतीवोत्सुका ॥
निनिन्द विरहातुरा शशिवसन्तवाटीमरु-
त्पिकालिरुतचन्दनप्रभृतिसर्वभोग्यं हृदि ॥ १२९ ॥

स हिमाचलोपि मुनिवाक्यकैतवा-
दमृतं पिबन्नपि न तृप्तिमाययौ ॥
न हि मध्यवर्तिनमनुत्तमं विना
महता समं घटनमेति गौरवम् ॥ १४० ॥

अथानयैव प्राग्दक्षविषयकस्वान्तःक्षोभादेव यदा स्वदेह-स्त्यक्तस्तत्प्रभृति नैसर्गिकनित्यसिद्धनिरतिशयवैराग्यशाल्यपि लौ-कदृक्कलिपततत्समुद्दीपनेन स्वरूपतः सततासङ्गोप्यसङ्ग इव सक-लवासोपि कृत्तिवासा इव स्वभावतः कालत्रयेपि परिग्रहविधुरो-प्यपरिग्रह इव ब्रह्मदत्तप्रागुक्तशापसंपन्नाहिमवज्ज्येष्ठनान्दिन्यात्म-ककुटिलाभिधगङ्गातरङ्गशीतलमृगनाभिसुरभितपारिजातादिसुरद्रु-मभ्रामितस्वतनुभूतातिमन्थरतरसमीरे कस्मिंश्चिद्धिमगिरिशिखरे तपश्चचाराद्वैतात्मसमाधिरूपमेव शिवः ।

तं दैवात्स्वयमागतं स्वसदनं सर्वेश्वरं शङ्करं
नीहाराचल एत्य संमुखममुं नत्वार्घ्यपाद्यादिभिः ॥

---

१ मनःसङ्कलनाद । २ परिग्रहः परिजनः स्त्रीच ।

सम्पूज्यास्य निषेवणाय तनयां साकं सखीभिः सदा
सुप्रीतां प्रयतामुमां तमतुलं संप्रार्थ्य नुत्याऽऽदिशत् १४१
न सोपि सुदतीमिमामननुमोदयद्यज्जने
घनेन दलितं न यत्तदिह वज्ररत्नं विदुः ॥
चचार तनुवाङ्मनःप्रणयतस्तदेकेप्सितं
सतीव किल साप्यलं सपदि गोत्रपुत्री चिरम् ॥ १४२॥

इत्यच्युतविरचिते गौरीवर्णनप्रथात्मा पञ्चमो मनोरथः सम्पूर्णः ॥ ५ ॥

———ooo———

## षष्ठोमनोरथः ।

भवत्वेवं गौरीपरिचरणमात्मस्थिरमते-
रसङ्गोदासीनप्रकृतिशमितद्वैतवितते: ॥
मतं शम्भोः प्रेम्णा कथमथ तदुद्वाहघटना
बभूवैवं राजा गुरुमथ स तं प्राह सरसम् ॥ १ ॥

अथ पुनरपि सर्वे सुरास्तारकासुरेणातिपीडिताः सन्तः सरसिजसम्भूतिं पुरुहूतपुरःसराः शरणमभ्युपेत्य प्रणत्यादिपूर्वकं स्वदुःखोदन्तमावेद्य सर्वज्ञवन्द्येन तेन गौरीहरयोर्निरुक्तरीतिकसन्निकर्षलक्ष्येण तस्य तस्यां रत्युत्पादनावसरद्वारे समुद्घाटितत्वादिनाऽनिरुद्धसञ्चारे सम्प्रेष्यतां सद्यः प्रद्युम्नो नाम वीरसार्वभौमः सवसन्तसामन्तस्तत्समाधिव्युत्थानाद्यवसरसुषिरमालक्ष्य माङ्गद्दृष्टमात्रकल्पिततन्मनोभृङ्गं लक्षणलक्ष्यं सुमनःशरैरेवाविध्य नित्यशुद्धबुद्धाद्वैतात्मानन्दामन्दमकरन्दतुन्दिलसमाध्यानन्दारविन्दादुद्वास्य निष्कलङ्कगौरीमुखकलानिधौ कस्तूरीतिलकमिव ततः

---

१ ब्रह्माणम् ।

सम्प्रसाध्य भावत्काशीःपङ्क्तीः कुमद्वतीः सुविकासनीया एवेत्याज्ञप्ताः सन्तस्तत्कालमेवैत्य सुधर्मामभिनन्द्य च मधुसहायं पञ्चसायकं सरतिकं ससुरभिकं च तत्र सम्प्रेषयामासुः । आजग्मुश्च तच्चमत्कारालोचनार्थमम्बरपथं सर्वेप्यमराः । तथा हि ।

निर्जरप्रकृतिरेव तादृशी प्रायशोथ खलु दृश्यते जने ॥
यत्परं खलु नियोज्य दुर्गमे तज्जयाद्यपि च दूरमीक्ष्यते ॥ २॥

ते च ।

यस्मिञ्छङ्कर आत्मचिन्तनपरः प्रस्थे हिमाद्रेरभू-
त्तत्रागत्य ससाध्वसा दिवि भुवि स्तब्धाः सुरास्तस्थिरे ॥
कामाद्याश्च सचिन्तमानसतया दुःसाध्यसिद्धीञ्छ्वः
को वा दुष्करकर्मतत्परमनाश्चिन्तातुरो नो जनः ॥ ३ ॥

तत्र च ।

समयेन विना विहाय मां धनदाशां कथमेति भास्करः ॥
इति दक्षिणया समीरणस्तमुपावर्तयितुं नियोजितः ॥ ४ ॥

ब्रह्मैव यत्र बत शान्तरसावलम्बि
ब्रह्मैकचिन्तनरतं क्व नु तत्र शोकः ॥
इत्येव भीरुपदघातमृतेप्यशोकः
सर्वाङ्गजोत्पुलकपल्लवपुष्पहासः ॥ ५ ॥

किं च ।

रसालमुकुलावलावलिकुलानि लोलान्यलं
तदीयवनपल्लवानवकलय्य पुंस्कोकिलाः ॥
कलैर्ललितकाकलीः स्वललनाः समालापनैः
स्मरानलसुविह्वलाः सपदि लालयन्त्याकुलाः ॥ ६ ॥

एवमन्येषामपि वैचित्र्यम् ।

१ सेवसभाम् । २ शिखरे । ३ उत्तरादिशम् ।

केषां नासीन्मनसि विचलितं सद्यो दृष्ट्वा स्मरशरललितम् ॥
नैपं पुष्पं मृदु सुविकसितं भूयोऽभ्राज्यभ्रमराविलसितम् ॥ ७ ॥
किंशुकसुमनोवृन्दं स्मरार्द्धचन्द्रेषुतां ययौ रक्तम् ॥
कृष्णान्तं च पलाशाभिधं पलाशाशनादयोग्यालेः ॥ ८॥

किं च ।

वर्णाधिक्यादेव तत्कर्णिकारं दातुं दक्षं कर्णिकां सुन्दरीभ्यः ॥
कर्णे वर्णाधिक्यमात्रैकलोभो नो गन्धादिर्दृश्यते तत्तथा तत्॥९॥

तदा तु सा तावदाकस्मिकाकालिकवासन्तिकवनलक्ष्मीर्गौरीव तुषारगिरिशिरःशिखराधित्यकाधिवासं भगवन्तं चन्द्रार्धावतंसं परिचरन्तीव तामनुकुर्वतीवावर्तत ।

आसीत्संयमितालिकुन्तलकुलादृष्टस्थलाब्जानना
प्रोन्मीलत्तिलका च केसरलसत्पीताम्बरावेष्टिता ॥
गौरी शम्भुमिव स्मरं रतिमिव प्रीत्या वसन्तं वन-
श्रीराराधयति स्म यद्यपि तथा पीतं न ताभ्यां तयोः १०

अथ तत्र सञ्चरति सति रतिसहचरे स्मरे तिरश्चामप्याविश्चचार सुरतविकारः । तद्यथा ।

मिलिन्दो माकन्दे लिहति मकरन्दं सदयितः
कुरङ्गीं सारङ्गः प्रमदयति कण्डूयनपरः ॥
गृहीत्वा चञ्चूभ्यां परभृदपि रासालमुकुलं
पिकीचञ्च्वां भूयः प्रयतनशतैः स्थापयाति च ॥ ११ ॥

कीरीं कीरः खञ्जरीटो वधूटीं जीवञ्जीवः सम्भ्रमत्तां चकोरीम् ॥
चुम्बन्मत्तोभूत्कपोतः कपोतीं केकी केकालास्यकाले मयूरीम् १२

अपि च ।

---

१ तिलकोवृक्षः भालस्थश्च । २ अम्बरं आकाशं वस्त्रं च । ३ पशुपक्ष्यादी नाम् । ४ मयूरः ।

हंसी बिसेन रसयन् सरसि स्म हंसः
कोकीं च तामरसकेसरतस्तु कोकः ॥
गण्डूषफूत्कृतिजलैर्द्विरदं करेणुः
सारस्युपस्पृशति सारसमम्बुलेशैः ॥ १३ ॥

किं च ।

विद्याधरीं गीतरसाप्तधर्मां विद्याधरः स्वाङ्गुलिभिः कपोले ॥
परस्पर्श ता अप्सरसोपि नित्यं गन्धर्वराजान्सहसाऽऽश्लिषन्ति १४

एवं तत्र सिद्धकिन्नरादीनां सर्वेषामपि देवयोनीनां तथा तथा लीलाविलासाः समाविरासन् । अन्यदपि ।

तत्रत्या मुनयः क्षणक्षणमपि स्वान्तं निरोद्धुं मुहुः
प्राणायामशतान्वितामपि पुनः प्रत्याहृतिं यत्नतः ॥
कुर्वन्तोपि च संयमं न किमपि स्वास्थ्यं समापेदिरे
प्रायो दुर्जय एव चित्तजनुषो[1] वेगो यतीनामपि ॥ १५ ॥

एवमपि ।

श्रीशङ्करस्तु कलिताखिलकर्मजालो-
प्यद्वैतचिद्रसनिरीहमना बभूव ॥
स्वप्नेपि किं भवति शारदसूर्यबिम्बे
ध्वान्तोदयः कथमपीह कदापि किञ्चित् ॥ १६ ॥

तत्र च नानाविधलतावितानसञ्जातनिकेतनद्वारविराजमानवामकरकलितकनकवेत्रनन्दीश्वरदक्षिणकरैकाङ्गुलिकलितनासिकानालसंयोगो ध्वनितगणचापलनिवारणे समीरसञ्चारविरामोपशामितसकलतरुदलसञ्चलने प्रशान्तपरभृतद्विरेफकूजिते संस्तब्धपक्षिजाते समुपरतमृगप्रचारे चित्राकार इव भगवतः परमेश्वरस्या-

---

१ कामस्य ।

श्रमे स कामस्तां नन्दिदृष्टिं युक्त्या वञ्चयित्वाऽन्तः प्रविवेश ।
ततश्च ।

निगमशाखितलेऽतुलनिर्मले विपुलचित्स्फटिकाऽमलवेदिकाम् ॥
अधिनिधाय भवद्विपवैरिणो विमलचर्म तदूर्ध्वमवस्थितम् ॥१७॥
किमपि सच्चिदनन्तसुखात्मकं विगतभेदमहाभ्रमवैभवम् ॥
चरणपाणितलाधरशोणभं शशिकलाङ्कजटासुहिरण्मयम् ॥ १८ ॥
कनकचारुभुजङ्गसमुल्लसत्सकलकुण्डलमुख्यविभूषणम् ॥
स्वभमलौकिकक्लृप्तमहश्चयं परमयोगिवराकृतिमीश्वरम् ॥ १९ ॥
निजचिदेकविभूतिविभूषितं विनिहिताचलसत्कमलासनम् ॥
चितिवराभयबाधनमुद्रितस्फुटचतुःशयकोकनदान्वितम् ॥ २० ॥
'उदयकालिकपद्मविलोचनद्युतिनवाङ्कुरमण्डितनासिकम्' ॥
दशनगौरतरद्युतिलेशतः सरससुन्दरपाटलिताधरम् ॥
दृढनिमीलितभालविलोचनं निभृतजन्तुमनर्घ्यगुणाकरम् ॥ २१ ॥
अनवलम्बितसप्तदशाब्दसद्वयसमुन्नतपुष्टपरिप्लुतम् ॥
शमपयोनिधिनिर्मथनोद्गतामृतमहानवनीतमिव स्थितम् ॥ २२ ॥
विरतिनूतनचारुविलासिनीकबरिकातुलशुभ्रमहामणिम् ॥
परममुक्तिसतीशुकनासिकाभरणचन्द्रसहीरकमौक्तिकम् ॥ २३ ॥
उपरतिस्खलसद्युवतिश्रितप्रकटमङ्गलसूत्रगहीरकम् ॥
विधिहरीन्द्रमुखामरमस्तकस्थितकिरीटकिणाङ्कपदाम्बुजम् ॥ २४ ॥
सकलसिद्धिसमिद्धनियन्तृता····यशःकुलसेवितपत्तलम् ॥
अमितविश्वमृगाम्बुतरङ्गिणीसमुदयादिकृतात्मचिदर्कभम् ॥ २५ ॥
कलितभक्तकृपैकपरामृतद्युतिसमाङ्गसुशोभितविग्रहम् ॥
असुरनिग्रहमर्चदनुग्रहं हरमिमं मदनः प्रददर्श सः ॥ २६ ॥
कुलकम् ।

---

१ स्वमकाशम् । २ इदमर्धमेवादर्शपुस्तके ।

अथ मन्मथस्तावत्सद्यस्तदलौकिकौजःसमीक्षणरभसमीलितेक्षणस्तत्क्षणमेव सञ्जातवेपथुपारवश्यानवेक्षितहस्तस्रस्तमधुकरमौर्वीकचम्पकदलकाञ्चनकेतकच्छदचापाञ्चितारविन्दाशोकमाकन्दमल्लिकानीलोत्पलपञ्चपत्त्रिमहास्त्रः शिथिलीभूताखिलमनोरथः स्वेदबिन्दुसमभिषिक्तसर्वाङ्गः कांदिशीकतया सस्फूर्जथुकाकस्मिकविद्युदवलोकनचकितकुरङ्गकुमारसहचरविलोचनश्च दैवादुपागतां विजयादिसखीभ्यां स्वपराभूतिभीताभ्यां रतिवनद्युतिभ्यामिवानुगम्यमानां स्वप्रतापप्रदीपं पञ्चास्यतेजःप्रसरदर्शनप्रचण्डपवनपर्याकुलमपि निजाङ्गौजःस्फटिकपञ्जरसंनिवेशनेव संजीवयन्तीं पद्मरागाभरणस्थाने तदनादरपूर्वकमशोकं किंशुकं बन्धूकं ताटङ्कस्थाने तदुपर्येव कर्णिकारं तथा कर्णमौक्तिकगुम्फितकपालस्थले तदूर्ध्वमेव बालमाकन्दमञ्जरीवृन्दं महानीलनिलयेपि तमालपल्लवं च धारयन्तीं वसन्तकालोचितकुसुम्भारुणमम्बरं परिदधन्तीं सन्धीभूतसुस्तब्धचिकुरमधुकरतया विलोलविलोचनचकोरतया स्मितसितप्रभाङ्कुरतया शोणतराधरकरचरणपल्लवतया च कनककल्पलतामिवात्मानं द्योतयन्तीं करकलितलीलारविन्देन पुनःपुनः स्ववदनपद्मोपसृतमधुव्रतव्रातं निवारयन्तीं भगवतीं निरुक्ताश्रमाभिमुखमुपयान्तीमन्तिक एवोमामलक्षयत् । ततश्च ।

उमां कामो दृष्ट्वा स्वयुवतिशताराध्यचरणा-
मगात्किंचिद्धैर्यं हरहृदयसङ्कर्षणविधौ ॥
शरद्भानूत्तप्तः परमविकलः प्राचि तडितं
विलोक्याम्भोवृष्टौ हृदि समुदितश्चातक इव ॥ २७ ॥
यथायथोमा सविधं प्रयाति तथातथा वृत्तिरमुष्य शम्भौ ॥
बभौ चिदेकस्फटिकायमानादर्शे किमस्याः प्रतिबिम्बमेषा ॥२८॥

---

१ मधुकरसमुदायम् ।

ततश्च लतागृहद्वारवर्ती नन्दीश्वराख्यः प्रतिहारी परमनम्रतया शनैः शङ्करसमीपमुपेत्य सखीयुग्मसमं तामुपासितुमागतां तुहिनाचलसुतां निवेद्य भ्रूसङ्केतमात्रतार्कितप्रवेश्यतां तां प्रवेशयामास । तदुत्तरम् ।

जया च विजयाह्वया सहचरी तदीयाऽऽदितः
शिवस्य चरणाम्बुजे समभिवाद्य हर्षाश्रुभिः ॥
सहैव निदधे शुचिं सुमनसां चयं सञ्चितं
स्वहस्तत ऋते नखैरतुलभक्तितस्तन्मतम् ॥ २९ ॥
गौरी सापि तदुत्तरं स्मितलसद्बिम्बाधरं सादरं
स्रंस्यत्कुन्तलकर्णिकारनिकरं भ्रश्यद्वितंसाङ्कुरम् ॥
पादाब्जं प्रणनाम शाम्भवमथो नान्यं प्रियं प्राप्नुहि
त्वं लब्धित्यमृतेन तेन किल सा सिक्ता लतेवोद्बभौ॥३०॥
समयमेतमवेक्ष्य स मन्मथः स्वधनुषो गुणदार्ढ्यमदर्शयत् ॥
अवसरव्ययतोभयतस्तथा द्रुतविलम्बितमास तदीहितम्॥३१॥

अथोमापि तदुचितत्वेन पूर्वोक्तगङ्गान्तर्गतसुवर्णबिसिनीविकसितशतच्छदबीजानि पूर्वं संगृह्य रविकरसंशुष्काणां तेषां स्रजं सङ्ग्रथ्य समानीतां तामिदानीमिश्वराय कोकनदस्पर्द्धिना स्वकरेण तच्चरणाभ्यर्णमनयत् । सोपि प्रेमपारवश्याद्यदा तदादानायोद्युक्तस्तदैव प्रचण्डवडवानलज्वालामामिषाशया जिघृक्षुः शफर इव हरस्वाधीनतां चिकीर्षुः पञ्चेषुः संमोहनं नाम पुष्पधन्वन्यमोघं बाणमयोजयत् । ततश्च ।

किञ्चिद्विशीर्णधृतिरीश्वर एव साक्षा-
त्सङ्गस्य दोषमुपदर्शयितुं तदासीत् ।
सन्ध्यारुणस्फटिकभूभृदिवाक्षिपद्मं
गौरीमुखेपि समयोजयदिन्दुतुल्ये ॥ ३२ ॥

उमापि प्रोन्मीलत्पुलकमुकुलाङ्गी नतमुखी
विलोलाक्षी किंचिद्वलितगलनाला च समभूत् ॥
न गन्तुं नो स्थातुं किमपि च शशाक क्षणमपि
श्लथन्नीवीचोलग्रथनकबरीबन्धविकला ॥ ३३ ॥

अथ तत्कालमेव सर्वज्ञचक्रवर्तिमुकुटचन्द्रिकाचुम्बितचरणपल्लवः स भगवाँल्लीलाकलितनिरतिशयवशित्वेनेन्द्रियक्षोभं निरुध्य तत्कारणान्वेषणयाविषमाणीक्षणानि क्षणं दिक्षु न्यक्षिपत् । युक्तमेवैतत् ।

न विभोः क्वचिदस्ति विक्रिया यदि चेत्क्षणमेव शाम्यति ॥
गुहया नभसि प्रतिध्वनिर्जनितोप्येष किमीक्ष्यते चिरम् ॥ ३४ ॥

तत्र तु कर्णान्ताकृष्टकुसुमकार्मुकमधुकरमौर्वीनियुक्तसंमोहनफुल्लनलिनबाणं सङ्कुचितसव्यचरणं चक्रीकृतचम्पकरुक्मकेतकशरासनं प्रहर्तुकामं कामं च ददर्श प्रददाह च तत्कालमेव ललाटलोचनजनितानलज्वालजालं तूलमिव प्रलयज्वलनार्चितः । तदानीं तु ।

यदवधि सुराः शम्भुं व्योम्नो निरीक्ष्य दयानिधे
त्वमिममधुना त्राहि त्राहीत्युदीरयितुं गिरः ॥
स्मरविषयिणीं दृष्टिं चक्रुर्भयातुरचेतस-
स्तदवधि किल ध्वस्तः सोऽभून्निरूपितवह्निना ॥ ३५ ॥

ततश्च रतिस्तावत्तददूरभावचरन्ती चण्डवातोन्मूलिता स्थलनलिनीव मुहूर्तं मूर्च्छया प्रियवियोगजन्यदुःखोद्रेकानुभावमूकीकृतबहिरन्तःकरणया क्षणमनुगृहीतेव करुणया बभूव । तदुत्तरं तु ।

शङ्करः स करुणाकरो नृणां नो शमाय रमणीसमागमः ॥
आदिशन्निति तदैव लीलया निर्गुणात्मनि तिरोहितोऽभवत् ३६

अथ रतिः शनैरुत्थाय किञ्चित्किञ्चित्सावधानमनाः समुन्मीलितलोचनोत्पला सती पुरःपातितभस्मसात्कृतपतिशरीरं पश्यन्ती भूरितरं चिरं विलपन्ती तदनुगमनाय कृताध्यवसायाऽत एव परमकारुणिकेन सकलव्यापकेन भगवता रोहिणीरमणशेखरेणाकाशवाण्यैव तावदये स्मरसहचारि त्वं स्वपतिं द्रुतमेव प्राप्स्यसीह तनुस्त्यागस्तावदनुचित एवातः किञ्चित्कालं स्वधर्मत एवाभिरक्षस्वेदं स्ववपुर्यदनेन पद्मयोनिः पुरा स्वतनयां प्रत्येवाभिनियोजित इति तेन तदानीं क्षणान्तरे सावधानेन सता त्वं भाललोचनवह्निनैव भस्मावशेषतामेवोपैष्यसीति शप्तस्ततः पुनर्धर्मप्रार्थनया प्रसन्नेन यदा भगवान्भव एव तावदवश्यायालयतनयां तत्तपःप्राचुर्यप्रणयेनैव परिणेष्यति तदा किल समनुभूतलोकदृष्टिकल्पितकामसुखः पुनः स्वेनैव शरीरेण निजेच्छामात्रसिद्ध्येव त्वां संयोजयिष्यतीत्यनुगृहीतश्चेति तदानीं त्वमवश्यं फलितमनोरथा स्या इति प्रबोधिता सती तावत्कालं तदाज्ञापारिपालनतत्परैव सद्यः किञ्चित्प्रशान्तशोकानला प्रकृतासक्ता चासीत् । युक्तमेवेदम् । तथा हि ।

महतामपराधेपि च किञ्चित्कोपः प्रसाद एवोर्ध्वम् ॥
मथितादब्धेः प्रथमं विषमथ लक्ष्म्यमृतकौस्तुभाद्याप्तिः ३७

एवं सति ।

अथ सपदि सुभीतां रुद्रकोपेन गौरीं
दुहितरमतिवेगादेत्य नीहारशैलः ॥
हृदि बत विनिधायाश्लिष्य दोर्भ्यां शमार्थं

---

१ अवश्यायालयः हिमालयः 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्' इत्यमरः । तस्य तनया कन्या पार्वती । २ भव ।

जलनिधिरिव लक्ष्मीमाययौ सद्म शीघ्रम् ॥ ३८ ॥

किं च ।

सख्योः समक्षमिदमित्यलं ह्रिया नम्राननाविफलितस्वरूपतः ॥
वैय्यर्थ्यतः पितृमनोरथावलेः शून्यान्तरा च ललिताप्यसावभूत् ३९

एवं च सा रहःसवनैकतत्परतया निजरूपादिसाफल्यं नैव विना शिवपत्नीत्वं तच्च नैवान्तरा तादृशतपःसमाधिमिति सर्वविद्यानिधित्वादध्यवस्य तन्मात्रोत्कलिकैवास्तीति सखीमुखेभ्यः कदाचित्तन्मात्रा मेनयाकर्ण्य ततः शताधिकयुक्तिघटितोक्तिभिः प्रेमप्रचुरं निवारितापि प्राच्या मीमांसया विशुद्धाद्वैतब्रह्ममात्रतत्परा चतुर्लक्षणीव नैव मेने । ततः क्षिप्रमेव मनोभिलाषज्ञमित्यभिज्ञं स्वजनकं निकटावस्थितस्वरहःसहचरीमुखेनारण्यविनिवासं निजाभिलषितसिद्ध्यवधिकतपःसमाध्यर्थं प्रार्थयत् ।

अथ तेनाप्युचिताभिनिवेशसञ्जातहर्षेणाभ्यनुज्ञाता पार्वती । लोके गौरीशिखरमित्यद्यापि तन्नामैकविख्यातं नीलकण्ठोत्कण्ठाकुलतयेव नीलकण्ठान्वितमिव प्रतस्थे प्रस्थम् । केचित्तु कदाचिदागतेन देवर्षिप्रवरेण भगवता नारदेन हिमाचलकृतसकलातिथ्यत्परितोषव्यञ्जकस्मितप्रकाशमानकुन्दमुकुलायमानरदेन । तत्पार्श्ववर्तिनीं भुवनसुन्दरीं कुमारीं निरीक्ष्य तदनुरूपवरविचारचातुरीप्रसङ्गतः शिवादिसकलदेवानुपवर्ण्य विष्णुरेवैतदनुरूपः पतिरिति तत्पितृमनसि दृढीकृते सा तावत्तदुत्तरक्षण एव तमपृष्ट्वैव सखीमात्रकृतसन्मन्त्रा श्रीशङ्करचरणैकनिष्ठा पारवश्येनानादृतमात्रादिरपि सती भगवती महासती मुमुक्षुमितिरिव श्रद्धया तया सहैव निरुक्तवने सिद्ध्यर्थं गूढं जगामेत्याहुः । उचितं चैतत् ।

को वा बाधितनिश्चितामितगुणग्रामान्वितस्वेप्सिता-
च्चित्तं स्रोतैं इवानतादपि पथो यत्नैः परावर्तयत् ॥

---

१ रहःसवनम् एकान्तस्थानम् । २ शिखरम् । ३ खचितः ।

किं चैवं शुभकर्मणि स्थितजनं को नानुजानाति वा
लोकेस्मिन्ननुमोदते खलु शिखी केकाकलैश्चातकम् ॥ ४० ॥

अथोमा तत्र गत्वा मुनिवेशं बभार । तद्यथा ।

साहारानपसार्य वल्कलधरा वेणीं विमुच्यादरा-
ज्जूटीमेव जटाभिराश्रितवती मौञ्जीं च काञ्चीस्थले ॥
भूर्जत्वक्परिधानतोऽत्यजदसौ कौशेयकार्पासकौ
भस्मोद्धूलनतोऽङ्गरागमखिला भूषाश्च रुद्राक्षतः ॥ ४१ ॥

अपि च ।

कुशग्रहणतत्परा सततशायिनी स्थण्डिले
शिलातलनिषेदुषी भुजलतोपधायिन्यपि ॥
महोच्चमृदुतल्पगस्वकचविच्युतवन्मालती-
दलादपि बत व्यथामभजदङ्गरागाच्च या ॥ ४२ ॥

किं च तया ।

सविलासगतिस्तु राजहंस्यामपि लोलेक्षणमेणवल्लभायाम् ॥
स्मितमम्बुजिनीषु च व्रतार्थं स्वकनिक्षेपमिवार्पितं गृहीतुम् ४३

न चास्यास्तदानीमालस्याद्याप्यास ।

स्वयमेव तु बिल्ववृक्षवृन्दं दृढकुम्भस्तनसम्भवैः पयोभिः ॥
समवर्धयदग्र्यजन्मना यान्न गुहोप्यग्रजताच्युतान्प्रकुर्यात् ४४

आसीच्चास्याः समीपे प्रायः सर्वसत्त्वानां परस्परनिर्भयत्वमे-
तदनुरक्तत्वं च । अतः ।

नकुलैः सह भोगिनीकुलं बहुलीलं किल खेलनाकुलम् ॥
मृगबालक एत्य नाकुलं खलु शार्दूलकिशोरकैः सह ॥ ४५ ॥
वनधान्यकणाञ्जलिव्रजैर्हरिणाः प्रत्यहमर्पितैस्तया ॥

---

१ जटाग्रन्थिम् । २ भुजलता उपधानं ( 'उशी' ति लोके ) यस्याः ।
३ 'ठेव' इति भाषायाम् ।

दद्दशुर्मुखपद्ममुत्सुकाः सततं तन्निकटैकचारिणः ॥ ४६ ॥

अपि च ।

सुस्नातीं त्रिषवणमभ्रगाङ्गतोये
भस्माक्षाभरणवतीमधीतिनीं च ॥
ध्यायन्तीं शिवमथजूहुतीं यथोक्त-
मीयुस्तामभित ऋषीन्द्रवार्धकानि ॥ ४७ ॥

युक्तमेवैतत् । यतः ।

न वयः खलु वीक्ष्यते बुधैः श्रुतितद्बोधतदाचरज्जने ॥
किमभीप्सितदानकोविदो न हि चिन्तामणिरस्त्यलं लघुः ४८

एवं च तदीयं तपोवनमप्यतीव रम्यतमतामेवाप । तथा हि ।

अभिमतफला वृक्षा आसन् विरोधमपालय-
न्नतिसुहृदभूत्सत्त्वव्रातः शिवानि सरांस्यपि ॥
स्मितसुमनसः कूजद्भृङ्गध्वनिस्फुटशिञ्जिताः
सततमभवन्वल्यः सख्यस्तदीयतपोवने ॥ ४९ ॥

ततः सा मूर्तिमती ब्रह्मविद्यैव भगवती हैमवती महती महत्तमं तपः कर्तुं प्रवृत्ता सती स्वशरीरशिरीषातिगमसृणत्वमप्यनवेक्षमाणेव ग्रीष्मे तावच्चतुर्दिक्ष्वपि शुष्मचतुष्टयमपि सुपुष्टं प्रज्वाल्य फुल्लाननकमलेव तद्बन्धुतयेव किरणमालिनं तटस्थदृष्ट्यैव पश्यन्ती चान्द्रायणान्येव चरन्ती चकोरीव चन्द्रमरीचीरेव सेवयन्ती वृक्षेभ्योप्यनायासपुरःपतितफलपुष्पादिनैव पारणाचरणं चरन्ती वर्षासु शिलैकशायिनी निरावरणदेशैकावस्थायिनी मुनिमनोवृत्तिरिव हिमागमेपि हिमाद्रिदुहितृतयेव तमगणयन्ती हिमानिलातुलशीतलजलनिलयतयैव स्फटिकशिलेवाचलजन्यतये-

---

१ आकाशगङ्गाजले । २ ऋषिवृद्धसमूहाः । ३ चत्वार अग्नयः ।

वाचलायमाना तदानीमपि तज्जलं सुप्रसन्नतमेन लोकोत्तरसुरभिगन्धिना विलोलविलोचनालकलेशालिना नीहारानिकरपुरःसरसमीरक्षताधिकलोहिताधरकेसरेण स्वमुखेनैव शरत्कालीनमिव कुर्वन्ती प्रसिद्धापर्णेतिस्वसमाख्यामूलीभूतं तपःपराकाष्टीभूतस्वयंनिपतितपक्वपर्णाशनवर्जनमप्याचरन्ती चिरतरसगुणनिर्गुणान्यतराद्वैतब्रह्मात्मानुसन्धानसंसाधितयमनियमासनप्राणायामप्रत्याहारधारणाध्यानसम्प्रज्ञासमाधिपूर्वकासम्प्रज्ञातापराभिधधर्ममेघसमाधिगतनिर्विकल्पानन्दमेवास्वादयन्ती कान्तिभरैकनिरस्तान् कमलभ्रमेणाननमुपयातान् भ्रमरान्पूर्णपीयुषकिरणभ्रमेण प्रमत्तचकोरांश्चानाकलयन्ती काञ्चनमृणालिनी मृणालपरिलालसनीयकोमलत्ववैभवेनापि शरीरेणैवमादिसुसम्पादितनानाविधतपःपुञ्जेन विश्वेश्वरसहितमपि विश्वं रञ्जयती विस्मापयन्ती च तपोमात्राचरणचक्रवर्तिचीर्णचिरतरसञ्चिततपोव्रातमपि तिरश्चकार । अहो महदाश्चर्यमेतत् ।

क्व सौकुमार्यं हिमवत्कुमार्याः क्वेदं तपः श्रोतुमपि ह्यशक्यम् ॥
शङ्के तदस्ता तनुरद्वितीयं स्वयंप्रभज्योतिरुपात्तरूपम् ॥ ५० ॥

अथेन्द्रादिभिः सर्वैरपि सुरैः पार्वत्यास्तपःप्रचयं तुषारकिरणचूडामणि चित्ताकर्षणनिपुणमवधार्य तं प्रत्युपसृत्य साभिवादनसहस्रविधानं संतत्वानुसंधानं सविनयनिचयं सभक्तिभरभाग्योदयं च शतरुद्रीयप्रभृतिभिस्त्रयीप्रधानश्रुतिशिरःपद्मरागायमाणवाग्भिः समभिष्टूय भोभगवंस्तारकहन्तारं कुमारं भगवत्यां पार्वत्यां तत्पाणिग्रहणविधानपूर्वकमस्मदादिजगदेकानुकम्पयैव । समुत्पादयितुमर्हसीत्यभियाचितः करुणामृतसमुद्रमात्रसविज्ञानमु-

---

१ चन्द्रकिरणभ्रमेण ।

द्रविग्रहः कृतसद्यःसुमनोनुग्रहः करिष्यद्गौरीकरग्रहः श्रीशङ्करस्तत्कालमेव कृतब्रह्मचारिबटुविग्रहः स्वीकृतजटाऽजिनाषाढमौञ्जिमाञ्जिष्ठवासःकौपीनवल्कलकमण्डलुकुशभस्मरुद्राक्षवलयपरिग्रहः कृतसकलशब्दब्रह्मसंसङ्ग्रहः संस्तदीयं तपोवनं तत्तपःपरीक्षार्थमिव तद्गुणाकर्षित इवाद्वैतचिदेकरसोपि भक्तिमात्रपारवश्यादेवोपागमत् ।

तया तत्राभ्येत्य प्रचुरतरपाद्यादिविधिना
कृतातिथ्यः स्वस्थं कुशललितबृस्यामुपविशन् ॥
तपःक्लेशक्षीणप्रकृतिकृशतन्वापि लतया
प्रणामैः सप्रेमस्फुटमभिनुतः स्वर्द्रुम इव ॥ ९१ ॥

उचितं खल्विदम् । यतः ।

कृतचिन्मयैकरसतानुभूतिकै-
रुपशान्तिशालिमनसामपि द्रुतम् ॥
वपुरादिहृद्यगततारतम्यतो
भवति श्रुतीरतिसमर्हणं किल ॥ ९२ ॥

अथ स वर्णी तावदपर्णामभ्यर्णमृजुनैव नेत्रद्वयेनावलोकयन् कुशलमपृच्छत् ।

अप्यस्ति स्वाह्निकार्थं कुशकुसुमसमित्पल्लवं ते सुसाध्यं
तोयं स्नानादियोग्यं न किल विकलता वर्धितानां द्रुमाणाम् ॥
अप्यास्ते त्वत्प्रवृत्तिस्तपसि निजवपुःशक्त्यनुल्लङ्घिनी च
यस्माद्धर्मे निदानं यदि खलु सुदृढं स्याच्छरीरं मनश्च ॥९३॥

किं च स्वस्य सौहार्दपात्रतया परत्वममन्वैव यदि वदिष्यसि स्वहार्दतत्त्वं तर्हि पृच्छामीत्याश्वासनमपि स तां सतां सञ्चिन्तनीयोपि याचते ।

१ स्वभावत एव कृशा तनुः शरीरमाकृतिर्वा यस्याः । २ ब्रह्मचारी शिवः
३ न मत्वा न ज्ञात्वेत्यर्थः ।

अध्यानम्रशरत्सरोजवदने श्रद्धातपोधीधने
नत्वं मामितरं कदाचिदपि वै ज्ञातुं मनस्यर्हसि ॥
सख्यं सांप्तपदीनमेव गदितं सद्भिः सतोस्तत्त्वभू-
द्यत्प्रत्युद्गमनं त्वया विरचितं तेनैव किं नावयोः ॥ ५४ ॥

अत एष जनः प्रियंवदां त्वां
प्रतिपित्सुः किल किंचिदेव हार्दात् ॥
द्विजतोचितचापलः क्षमाभृ-
त्तनये प्रेम्णि न गोप्यमस्ति किंचित् ॥ ५५ ॥

ततस्तयानुत्तरेणैवोत्तरदानाङ्गीकृतिरकारीति मन्वानः स तदुत्तरमन्तरैवौत्कण्ठ्यात्संपृच्छति ।

जनुस्तव विधेः कुले वपुरदो जगत्सुन्दरं
वयोपि नवमुत्तमं सुखमनन्तरत्नादिभिः ॥
श्रुतं कलितवाङ्मयं गृहचराः सुराःसर्षय-
स्तपः फलमतःपरं किमधिकं त्वया लप्स्यते ॥ ५६ ॥

किं च ।

सौदामनी चतुरनामगिरीन्द्रजापि
तापप्रकाशपरिवर्षणतः स्वशान्तिम् ॥
त्वं तादृगप्यचपला न मनस्विनी च
विद्याविधानमपि किं ग्लपयस्यदोऽङ्गम् ॥ ५७ ॥

अपि च ।

त्वद्रूपं शोकशङ्कामचलपितृगृहं मानभङ्गावकाशं
स्वर्गेच्छाऽनिष्टघातस्वविषयकतृषस्तात देवाङ्गणत्वम् ॥

---

१ सप्तभिः पदैरवाप्यते इति साप्तपदीनं सख्यं ' साप्तपदीनं सख्यं ' इति पाणिनिसूत्रेण निपात्यते । २ प्रतिपत्तुमिच्छुः । ३ स्नेहात् । ४ द्विजताया द्विजत्वादुचितं योग्यं चापलं यस्य । ५ जन्म ।

ते यावत्स्त्रीगुणत्वं स्वमतवरवरं ज्ञानमेवामृतेहां
हन्तीति त्वं तपोदः किमिति बत वरस्यम्बुजास्ये दुरापम् ५८
मनस्तव मयेक्षितं सुदति दीर्घनिश्वासतः
सलिप्समथ नेक्ष्यतेऽभिलषणीयवस्तु कचित् ॥
अतो विशयलोलताकुलमिदं मदीयं मनः
स्थिरीकुरु वचोमृतैरमृतकान्तिवक्रेऽधुना ॥ ५९ ॥
तारुण्य एव सकलान्यपि भूषणानि
त्यक्तानि दिव्यवसनानि च मण्डनानि ॥
कस्माच्च मन्युचितभूतिविभूषणादि-
र्बलित्वया विरचितोस्ति परिग्रहो यम् ॥ ६० ॥
नैतत्किल त्रैलोक्यसुन्दर्यां त्वयि राजते । तथा हि ।
योग्या या मधुयामिनी शशिमुखी सन्ध्याम्बरा निर्मला
तारालङ्करणा तमोतिकबरी सौरम्यसंशालिनी ॥
सा चेन्मेघकुलाकुलाऽतुलतडित्पिङ्गा सझञ्झानिला
घोराऽऽसारवती च किं सुमनसामप्यस्ति नोद्वेगदा ॥६१॥
अन्यच्च ।
तपनपरिक्लिशासि कल्पवल्ली बत दुःखाय निरीक्षतां न केषाम् ॥
अनुपमधृतिरेष यो मतस्ते तरुणो यत्सजटामुपेक्षते त्वाम् ॥६२॥
स खलु विगुणो यो लालस्यस्तवास्ति सुमध्यमे
निजसुभगताभ्रान्त्या यस्मादसौ किल वञ्चितः ॥
यदिह न तनोत्यासां दृश्यं निरञ्जनताजुषः
सुरसवपुषोऽस्यापाङ्गस्य प्रतीच्य इवात्मनः ॥ ६३ ॥
अहमुत्तमपूरुषः कथं सुदृशाद्य स्वयमैक्यमाप्नुयाम् ॥
इति किं गुणिनोपि युज्यते यदि चेत्किं श्रुतिशेखरेक्षणात् ६४
एवमपि तया निजौचित्योत्कर्षान्मौन एवावलम्बिते सामोपा-

यमपास्य ब्रह्मचारिवेशः किशोरहिमकरशेखरः करुणाकरःश्री-
शङ्करस्तावद् द्वितीयवयस्कां तां कान्तां द्वितीयोपायेनैव विनो-
दयामास ।

इतः परमलं श्रमैस्तव तपःपरैः सुन्दरि
ममास्ति विपुलं तपो बत पुरा श्रमासादितम् ॥
भजस्व निजवाञ्छितं किल तदर्धभागेन मे
वरं परममपाकुरु त्वमिह तद्विवित्सां च मे ॥ ६९ ॥

इति तेन प्रलोभिताप्यमुना तं प्रत्यनुत्तरयन्त्येव पार्श्ववर्तिन्याः स्ववयस्यायाः प्रत्युत्तरचतुरतरे मुखहिमकरे कुरङ्गमिव परिवार्तिताक्षिकटाक्षं न्यक्षिपत । ततश्च तदिङ्गितज्ञा तत्सखी कौमुदीप्रचारविकासिता कुमुदिनीव भो भो नैष्ठिकवारिष्ट यदि तवैतदुदन्तश्रवणोत्कण्ठा तर्हि शृणुष्वेत्यामन्त्र्य अयि वर्णिचूडामणे इयं हि तावदमरवरप्रभृतिनिखिलदिगीश्वरानप्यनादृत्य स्वसमक्षमेव मन्मथस्यापि निर्मथनाद्रूपलावण्यादिरमणीगुणानाकर्षणीयमतिरमणीयं भगवन्तं चन्द्रशेखरमेव भर्तारमवाप्तुमिच्छन्ती तन्नेत्रानलाभिदग्धः पञ्चशरः प्रायः पिशाच एवास्याश्चेतस्तदारभ्यैवाविष्टः सन्नेनां सम्भ्रामयतीत्यसौ हिमैकप्रचुरेषु चिरतरं प्रस्तरतलेषु शयानापि नैव मदनदहनवेदनाशान्तिं मदनदहनैकविरहव्याकुला प्राप्तुं कुशला सती चन्द्रिकादिनिन्दनचन्द्राद्युपालम्भस्वप्नप्रदर्शननिद्राननुभवनदुःसहवियोगरोदनविभ्रमोन्मादाद्यनन्तवियोगिनीव्यापारपरवशापि लोकोत्तरश्रुतविचारचतुरतया महेश्वरप्राप्तेर्यद्दुष्करमित्यादिशास्त्रशतवशेन तपोमात्राय तत्त्वावधारणेनास्मदादिसखीमुखतः पितृचरणाभ्यनुज्ञया प्रकृतप्रस्थमा-

---

१ बालचन्द्रः शेखरं मस्तके यस्य । २ वेत्तुं ज्ञातुं इच्छा विवित्सा जिज्ञासेत्यर्थः । ३ ब्रह्मचारिश्रेष्ठ ।

गत्य रोपितैतद्द्रुमफलोद्गमेपि स्वचरितनिर्विकल्पसमाध्यन्तासंख्यातमहातपःफलोद्गमाङ्कुरमप्यपश्यन्ती निसर्गकृशाङ्ग्येवोक्ततपोतिकृशाङ्गी शुक्लप्रतिपच्चन्द्रलेखेव कस्य न दर्शनीयेति दीनदयानिधिना किमित्याशुतोषेण भगवता महेश्वरेणाद्यापि सद्यः प्रादुर्भूय सप्रसादं सरसावलोकं च नेक्ष्यते वीक्ष्यते चास्माभिरेतद्दशादर्शनदग्धविदग्धहृदयाभिः सदयाभिः सखीभिरेवाहर्निशमिति न प्रत्यवादीत् ।

अथ सोपि सोपहासमिदमेवमित्यसूचितहासचिह्न एव गौरीवदनारविन्दं निरीक्ष्य पुनरपि तामेवापृच्छत् ।

ततः सापि तन्मनोभङ्गैकभिया तं प्रति स्वाग्रहरूपामिव मुकुलीकृताङ्गुलिदलारुणकमले स्फटिकाक्षमालां स्थापयन्ती चरणनखेन भुवमालिखन्ती नतवदनवारिजाता यथाकथंचिदल्पाक्षरमेव तात्पर्यमात्रेण प्रकटतरसारं व्यवस्थितहेतुमचरं परपुरुषतया तत्त्वविद्येव तदाननमनवेक्षन्त्येव तत्र निरुपमपात्रतामवधार्य स्वयमार्ययैव परमार्यतया निजैदम्पर्यं प्रकाशयामास ।

भो वर्णिसुन्दरत्वं सखीमुखाद्यदशृणोस्तदस्ति तथा ॥
उक्तोत्कलिकामपि किं न तपोऽमृतमाशु संफलयेत् ॥६६॥
अथ वक्ति स वर्णिसुन्दरः सजुगुप्सान्विदितो महेश्वरः ॥
उचितं त्वमहो तदर्थिनी यदसि प्रस्तरपुञ्जनन्दिनी ॥६७॥

यतः ।

करोयं ते मन्ये कमलसुकुमारोपि कबरी
महाभोग्यभ्यासा प्रथममपि पाणिग्रहविधौ ॥
सकम्पो नो भूयाद्वलयफणियोगात्पशुपतेः
परं भूयादेव स्मरशरपराधीनमनसा ॥ ६८ ॥

त्वमेव परिचिन्तय क गजचर्म दुर्गन्ध्यलं
दुकूलमपि ते क वा हरिणनाभिसङ्कष्टितम् ॥
श्मशानधरणी क वा बहुकचास्थिभस्माविला
क वा सुमुखि ते पदे कुसुमतल्पगालक्तके ॥ ६९ ॥

किं च ।

मृगमदकर्दमचित्रितौ स्तनौ तव शिवसङ्गमतो भविष्यतः ॥
शशिवदने चितिभस्मनाङ्कितौ रिपुरपि ते क इहानुमंस्यते ७०

अयोग्यं किं वास्मादिभवरसुहार्यापि सुभगे
त्वमूढा स्या वृद्धोक्षमपि सहसा धिष्ठितवती ॥
तदा स्मेरास्यः सन्सुजननिकरस्ते यदि धियं
विनिन्द्यात्किं तस्माज्जगति सुमतेर्दुःखदमये ॥ ७१ ॥

अपि च ।

विडम्बनमिदं भवेदपरमक्षतारोपणे
त्वदीयकरकङ्कणैर्हरकपालमालाकलः ॥
तदीयवलयोरगं स्वकबरीधिया त्वं यदि
स्पशस्यासि भयाकुला किमु तदा न मूर्च्छातुरा ॥ ७२ ॥

कपाल्येकप्रेम्णा शुचिरपि हसत्कान्तिरपि च
प्रकृत्या तन्वङ्गी परमललिता चामृतमयी ॥
शलाका कर्पूरी जगति निखिलानामपि दृशोः
कला बालाशोच्या सपदि हिमभान्नः कथमियम् ॥ ७३ ॥

अन्यच्च ।

विरूपाक्षं रूपं धनमपि महद्दिग्वसनता
जनेरेवाभावः क खलु कुलचिन्तापि च पुनः ॥

---

१ ऐरावतारोहणयोग्या । २ वृद्धं नन्दिनं 'अचतुरे'ति निपातनादच् ।

श्रुतं नैव ज्ञातं भवति बत केनापि सहसा
वरेष्वन्वेष्यं यत्तदिह सुदति व्यस्तमपि किम् ॥ ७४ ॥

ये शाकुन्तलवेणिकाप्रविलसद्रत्नावली मालती
नागानन्दमनर्घ्यवीरचरितं बोधचन्द्रोदयम् (?) ॥
प्राप्तुं वाञ्छसि पार्वतीपरिणयात्सङ्कल्पसूर्योदय-
स्त्वामद्यापि तपःकृशामपि कथं लग्नोस्त्ययं पद्मिनीम् ॥ ७५ ॥

लोके सीमन्तिनीनां परिणयनविधौ या प्रवृत्तिर्व्यलोकि
सर्वाप्येषा तृतीयं किल चरमसमं साधितुं स्यात्पुमर्थं ॥
मुग्धे योद्यत्वदिष्टः स तु तमपि पुनस्त्वत्समक्षं ददाह
तत्राप्यस्मिंस्त्वदिच्छा जगति विकसयेत्तावकं पार्वतीत्वं ७६

अत एव ।

तस्माद्बाले त्वं निजचेतः प्रतिबोध्य
व्यर्थादस्मादाग्रहतः संनय शान्तिम् ॥
वासोभूषामण्डनजातं सकलं त्वं
पाहि त्यक्त्वा शृंगमिदं मत्तमयूरम् ॥ ७७ ॥

अथैवं प्रतिकूलवादिनि वर्णिनि सति वरवर्णिनी महासती सा प्रकम्पमानाधरपल्लवा व्याकुञ्चितभ्रूलताव्यावर्तितनयनकोकनदा च तत्कालमेव बभूव प्रत्यवदच्च तं प्रत्येवम् ।

यो न वेत्ति परमार्थतः शिवं युक्त एष खलु तस्य वाग्व्ययः ॥
तद्रसानभिविदां सितोपलाः किं भवन्ति न नृणां सितोपलाः ७८

तथा हि ।

यावद्द्वैतमहाचितादहनजं यद्भस्म बोधात्मकं
शान्त्याख्यं विशदं तदस्य दधतः का वास्त्यमङ्गल्यता ॥

---

१ प्रबोधचन्द्रोदयम् । २ शिलामयत्वम् ।

उन्मन्येव महाश्मशानमुदितं नानाविधा योगिनो
नृत्यन्तः किल तत्र शास्त्रनिवहैस्ते वै पिशाचाः स्मृताः ७९
हत्वा महामोहगजं तदीयं चर्मेदमाभासितदृश्यरूपम् ॥
बिभर्ति लोकस्य दृशैव यद्वा गजासुरस्यैव कृपावशायतत् ८०
अहयः किल तस्य भूषणत्वं तपसा चित्तनिरोधलक्षणेन ॥
बहुजन्मकृतेन शेषमुख्याः समवापुः करुणामृताब्धिमूर्तेः ८१
यां मुण्डमालेत कपालमाला शिरोधृता तेन तु सैतदर्थम् ॥
जीवान्निजं कारुणिकत्वमेव व्यवक्तुमीशत्वमनादितां वा ८२
किं च ।

हरिप्रभृतिदेवताः सपदि यस्य पादोरजः-
प्रधूसरितहीरकावलिकिरीटधन्याः खलु ॥
स एव किमु दुर्बलो यदिह भोगसंशून्यता
तदीश्वरतयानिशं दृढविरक्तिसाम्राज्यतः ॥ ८३ ॥

वृषो वृद्धो योयं जगति बत तद्वाहनमभू-
न्स साक्षाद्धर्मोपि प्रबलतमभक्त्यैव तु तथा ॥
विरूपाक्षं रूपं तदपि धृतरूपाभिमतिकं
तदाहाक्षि क्षिप्रं निटिलगममुष्य स्मरामिति ॥ ८४ ॥

अपि च ।

लीलैव यस्य रचितुं यदनन्तकोटि-
ब्रह्माण्डजालमवितुं च दृढा निहन्तुम् ॥
तस्मिंश्चिदेकरसभूम्नि परे महेशे
कामस्य कत्तृणसमस्य कथैव का मे ॥ ८५ ॥

रूपं तस्य किमिन्दुमौल्युत कपाल्येवं किमात्माऽथ वा
द्वैतं किं शिवमेव भीममपि वा किं वा मृडं वा हरम् ॥

किं सोमाम्बुनिनीशवह्निनयनं किं वा विरूपेक्षणं
किं दिव्याभरणद्युता ह्यजनि वा को वेद विश्वाकृतेः॥८६॥

धनदो यदपाङ्गतः कुबेरः कृपया यस्य शचीपतिर्वृषासीत् । अपि च ।

अहो यस्यैवाङ्घ्रिं नयनकमलेनापि सहसा ॥
समर्च्य श्रीशोऽभूद्धरिरपि किमस्यान्यविभवैः ॥ ८७ ॥

आस्तां तावत्त्वदुक्तदोषाभासजातं किं तेनास्य जनस्य क्षतमथापि तत्र जनिहीनत्वब्रह्माद्यविदितश्रुतत्वे एव युक्ते भवतो नवमावतारीयविष्णुवाक्ये सर्वस्य विज्ञानमात्रत्वाहिंसापरधर्मत्वे इव सामान्यतः सर्वजनादरणीय एव ।

विधिमपि निर्माय पुरा लीलामात्रेण तं चतुर्वेदान् ॥
योऽध्यापयांबभूव स्वयं प्रभोस्य क्व जन्मविद्धि यत्ते ॥ ८८॥

अथ वा ।

किं खण्डनेन भवदुक्तमशेषमास्तां
मन्मानसं तु सहसैकरसं हरस्य ॥
पादाम्बुजैकरजसा सह सर्वदापि
किं पद्मिनीविकसतीह रवौ तस्मात् ॥ ८९ ॥

अथैवमपि पुनः शिवनिन्दनकामं तमोष्टस्फुरणादिलिङ्गैरालक्ष्य गौरी तावन्निकटवर्तिनीं स्वसखीं प्रति तन्निराकरणायाज्ञापयत् ।

अपि सहचारि वारयैतमन्य-
त्किमपि विवक्षणसंस्फुरद्विरोष्ठम् ॥

---

१ इतस्तनं श्लोकोत्तरार्धमादर्शपुस्तके न । २ तथैवात्रत्यं पूर्वार्धम् । ३ अनादित्वमित्यर्थः । ४ वक्तुमिच्छा ।

न हि किल महतां विनिन्दकैक-
स्तत इह यः शृणुतेपि सोपि पाप्मा ॥ ९० ॥

पुनश्च किञ्चित्सावधानीभूय सा यद्यपि रोषपरिपोषादिदं मयोक्तं रभसा[1]दथाप्येतदनुचितमेव ब्राह्मणविनिवारणस्य शास्त्रगर्हितत्वादित्यनुसन्धानमाह ।

अथ वाहमेव सखि याम्यतः स्थला-
दिति भाषयैव सह सञ्चचाल सा ॥
अतिदीर्घनिःश्वसितमुच्च[2]लाधरा
कुचकोरकोद्दलितचारुवल्कला ॥ ९१ ॥

ततश्च ।

आस्थाय स्वतनुमसौ स्मिताननः सन्
हस्ते तां परिजगृहे शशाङ्कमौलिः ॥
स्वेदाद्यैर्मदनकृतद्युपुष्पवृष्टिर्जाता
साप्यखिलफला प्रहर्षिणी[3] च ॥ ९२ ॥

अहमथ तपःक्रीतो दासस्तवास्मि वरानने
जहि तप इति प्रीत्या शम्भौ वचोमृतवर्षिणि ॥
झटिति तपसः क्लेशैर्मुक्ता स्फुटं ललिता च सा
सुरभिसमये वल्लीवासीन्नवेन्दुकलेव च ॥ ९३ ॥

किं च ।

गौर्यां जाते सति सुललिते शाङ्करेस्मिन्प्रसादे
सख्यस्तस्याः परममुदिताः सद्यः आसन्कृतार्थाः ॥
प्राच्यामिन्दाविव समुदिते सत्कुमुद्वत्य एव
साक्षात्कारे पति मुनिमतौ शान्तिदान्त्यादयो वा ९४

---

१ वेगाद अविचारत इत्यर्थः । २ कम्पिताधरा । ३ आनन्ददात्री ।

ततश्चोमा सखीमुखमवेक्ष्य ।
दाता पिता मां जगदीश्वराय नैवेतरस्मा इति तेऽस्ति बुद्धम्[1] ॥
संदिश्यतां तच्छिवपादपद्मे सखि त्वयेत्याह तदालिमार्या ॥९१॥

सख्या तयैव कथितेऽथ शिवोऽपि सम्य-
गित्युक्तितः स्मितलवादुररीचकार ॥
गौरीं विसृज्य ससखीं कथमप्युदारां
कैलासशैलशिखरं स्वयमुज्जगाम ॥ ९६ ॥

अथ स भगवानर्धेन्दुमौलिः सारुन्धतीकान् सप्तर्षीन् कश्यपादिवासिष्ठान्तान् स्मृत्वा तत्क्षणादुपगतांस्तान् हिमाचलगृहं प्रति स्वधर्मपत्नीं सम्पादयितुं गौर्याद्यपरनाम्नीमुमाख्यां तत्कन्यां याचयितुमात्मा मुक्तिं याचयितुं सप्तभूमिकाविशेषान् सविरक्तिकान् ब्रह्मपुराख्यहृद्यामिवाप्रेषयत् । तेचातिसन्तुष्टास्तत्र गत्वा तेनार्घ्यपाद्यादिरभ्यर्चितास्तद्याचितगौर्याख्यकन्यादानप्रतिज्ञानपरितोषिताश्च सन्तः कैलासं प्रत्यागत्य श्रीशङ्करचरणे निरुक्तवैवाहिकं तिथिनिर्णयमपि त्रिदिनौत्तरकालिकं निवेदयाञ्चक्रुः ।

ततः । सर्वेश्वराज्ञया ब्रह्मविष्णुवासवप्रमुखाः स्वस्वैश्वर्यसहिताः कैलासमागत्य श्रीशङ्करं वृषराजाधिरूढं मध्येकृत्य तदग्रतः पृष्ठतः पार्श्वयोश्च यथाज्ञं यथाधिकारं चावतस्थुः । अथ सभगवान्निरुक्तैश्वर्यसम्भारसहितस्तदोषधिप्रस्थाभिधमवश्यायराशिपुरमाजगाम । तं च जामातरं मेरुमन्दरप्रभृतिनिखिलधराधरराजसेनासम्भारमन्थरः स तुषारागारः प्रत्युद्गम्य यथाविधि सीमान्तपूजनपुरःसरं भगवन्तं श्रीशङ्करं सदेवर्षिपितृविद्याधराप्सरःप्रभृ-

१ ज्ञातम् । २ ओषधिशिखरं । ३ हिमाचल नगरम् । ४ हिमाचलः ।

तिसकलवैवाहिकनिकरं स्वनगरं प्रति लोकत्रयव्यापकोभयसैनिकालौकिकमहामङ्गलतूर्यध्वनिविविधधूपप्रदीपप्रसूनलाजव्रजवृष्टिमहोत्साहाडम्बरपूर्वकं समानीय दिव्यवासस्थानविनिवेदनपूर्वकं विश्वैश्वर्यसहितं विश्वेश्वरं निवेशयामास । अथ प्रातर्हिमाचलोपि स्वगृहे यथाविधि नित्यकर्मनिर्वर्तनात्परं कृतयथोक्तस्वस्तिवाचनादि यावद्वैवाहिकारम्भकर्मकलापः परमोत्साहात्तत्तत्कार्यव्यवस्थापनव्यग्रोपि सफलसकलमनोरथत्वेन सुप्रसन्नमना एवासीत् । एवं मेनापि दिव्यपुरन्ध्रीभिरन्विता सती परमसती भगवत्या गौर्यास्तावद्धरिद्रालेपनादिवैवाहिकमाङ्गल्याभ्यङ्गस्नानसुवसनपरिधापनकुङ्कुमाद्यालेपनकुसुममाल्यादिमण्डलादिव्यालङ्कारधारणं चारचयत् । ततः स हिमवान् स्वपुरोधःप्रमुखमेर्वादिसर्वस्वसम्बन्धिधुरन्धरपुरःसरं सर्वपार्वतवैभवप्रकाशनान्ततूर्यध्वनिपूर्वकं दिव्यस्वसेनानिकरं गृहीत्वा जामात्रा[1]वासं गत्वा तं समभ्यर्च्य दिव्यवस्त्रमहारत्नालङ्कारभूषितं ब्रह्मविष्णुवासवप्रमुखनिखिलदिव्यानीकिनीमाङ्गलिकासंख्याकानकभेर्यादितूर्यध्वनिप्रचुरतरसमारम्भपूर्वकसलाजकुसुमव्रजवर्षणनिपुणनागरतरुणीजनकृततद्वर्षणं महोच्चध्वजं नानाविधमङ्गलतोरणादिललितं धूपदीपाद्यलंकृतं सग्रहविवाहमण्डपमनैषीत् । अन्तःपुरे भगवती गौर्यपि मेनाप्रभृतिभिः क्लृप्तवधूवेसीत् । तद्यथा ।

काश्मीरालेपिताङ्गी परिहितललितानाहतोद्यद्दुकूला
नानाधूपाभिशुष्कग्रथितनवलसन्मालतीकुन्तला च ॥
आजद्यावप्ररोहश्रुतिरपि नयनाञ्च्यञ्जनालक्तकाढ्या
मात्रा काश्मीरसारस्फुटकृततिलका स्रग्धरा सा विरेजे॥९७॥

1 जामातृगृहम् । 2 देवसेना । 3 मालाधरा ।

किं च प्रसाधने कश्चमत्कारोऽपि तदास ।

माङ्गल्यैकफले दृशोश्चरणयोस्ते त्वञ्जनालक्तके
कान्तस्याधरशेखरामृतकरौ ताभ्यां स्पृश त्वं क्रमात् ॥
इत्याशीःसुगिरः प्रसाधनमनुप्रोच्चारयन्तीं सखीं
सस्मेरा ललितेक्षणानतमुखी गौरी स्रजाऽताडयत् ॥ ९८ ॥

अपि च ।

आदर्शे मुखमवलोकितुं मृगाक्षी
सख्याग्रे स्वकरधृतो यदा तदा सा ॥
अभ्युत्का हरकरसङ्गमे बभूव
स्त्रीणां हि प्रियकलनाफलः स्ववेषः ॥ ९९ ॥

ततश्च कारितकुलदेवतानमस्कारां तां मेना तात्रसतीः पतिपुत्रवतीः स्वसम्बन्धिसकलबन्धुजनकुलजरतीश्च प्रणामयांबभूव । तास्तु तां विश्वमातरमपि सुपुत्रा भवेति अपहरिष्यमाणप्रियार्धशरीरिणीमपि पत्युरखण्डितप्रेमामृतपात्रं भवेत्यात्मानुसारिणैवाशिषः समर्पयेयुः । अथ हिमालयो भगवन्तं चन्द्रशेखरं वरं सोपस्करं हरिविरिञ्चिपुरन्दरकुबेरप्रभृतिसुरवरविरचितसत्कारं सोल्लासतूर्यारवं नृत्यदप्सरोनिकरं गायच्चित्ररथविश्वावसुप्रमुखगन्धर्वेश्वरं प्रविकिरत्पुरकुमारीसाक्षतलाजकुसुमसम्भारं च पद्मरागैकविराचितायां चतुर्दिक्षु वैदूर्यस्तम्भान्वधृतस्थूलमुक्ताफलस्तबकसहस्रप्रविलसत्तोरणसमरकतमौक्तिकवितानयुतायां वेदिकायां यथाविध्यानीय सप्तर्षिमुखनिखिलमहर्षिषु चतुर्षु मूर्तिधरेषु वेदेषु च मन्त्रान् पठत्सु परमोच्चतमग्रहपञ्चकयुक्तवैवाहिकज्योतिःशास्त्रप्रसिद्धनिखिलदोषशून्ययावत्सद्गुणयुक्ते मुहूर्ते कैलासमे-

---

१ अत्युत्कण्ठिनी । २ स्वपतिरञ्जनफलः । ३ वृद्धस्त्रियः ।

नाकाभ्यां अन्तः काञ्चनमयदुकूलपटे धृते च सति सोच्चतारतूर्य-घोषं यथाविधि वधूवरसङ्गमनं साक्षतकल्पद्रुमकुसुमवर्षं कारयामास । ततस्तौ महोच्चतरहीरकविष्टरे समुपविष्टौ पार्वतीपरमेश्वरौ सर्वज्ञशेखरावपि सप्तर्षिवचोनुसारेणैव वैवाहिकयज्ञानुष्ठानं चक्रतुः कृतार्थं समेनकं समैनाकं हिमवन्तं सकलसुरवरमुनिवरव्रातं च कृतम् । इदानीं तु ।

अनाद्योर्दम्पत्योर्नवपरिणयव्रीडितवतो-
स्तयोश्चक्षुर्मीना अमृतमयलावण्यसरसि ॥
लसद्रूपाम्भोजेऽभिनवचिरयूनो विदाधिरे
सुखं यातायातान्यपि रसलसत्कातरया ॥ १०० ॥
गौर्याः करं तु हिमभूमिभृतार्पितं तं
शम्भुस्तदीयमपि सा जगृहे प्रमोदात् ॥
स्वेदोदबिन्दुपुलकैरुभयोस्तदैव
कामाब्धिमौक्तिकसुकञ्चुकिताविरासीत् ॥ १०१ ॥
अग्निं प्रतिष्ठाप्य तमर्चयित्वा प्रणम्य रेजे मिथुनं परिक्रमत् ॥
हृत्पद्मकोशस्य बहिश्छदेषु यथा परिक्रामति बुद्धिजीवम् ॥१०२॥

एवमौपासनाग्निं त्रिः परिक्रम्य वधूवरौ यथोक्तविधिना तत्र लाजादिहोमं चक्रतुः । अथ भगवान् शङ्करः श्रीकान्तप्रेरितः सप्तपर्णाया दक्षिणचरणाङ्गुष्ठमादाय तां प्रस्तरोपर्यश्मेव त्वं स्थिरा भवेति मन्त्रेण तत्र क्षणं तिष्ठन्तीं भूधरदारिकामप्यप्रार्थयत् । तदा किल कमलनिलयः सकलसुमनःसदःसमुपविष्टोपि त्रैलोक्याभिनवसुन्दर्याः पार्वत्याः केवलं दूरतः पादाङ्गुष्ठमात्रदर्शनात्संक्षुब्धकामाब्धिरतिमर्याद एव निःस्त्रवत्स्वरेतोपि समवरोद्धुं पि-

---

१ पार्वतीशिवयोर्मध्ये । २ आसन्नं । ३ प्रदक्षिणां कुर्वत् ।

तामहोपि कृतसततसमाधिरपि स्वयंप्रभातसकलसार्थवेदोपि परमेश्वरगुणमूर्तिरपि प्रागनुभूतस्वकन्याकामुकतापराधयातनोपि नैव शशाकेषदपि । युज्यत एवेदम् । तथा हि ।

यः संवित्सुखसत्यभूमगलितद्वैतोपि लीलावशा-
दाविर्भावितपूर्णशान्तिविरतिज्ञप्तित्रयीविग्रहः ॥
प्रागास्वादिततत्सुखामृतनिधिध्वंसातिदुःखोप्यहो
साक्षादीश्वर एव यद्गुणवशः के नाम तत्रेतरे ॥१०३॥

ततस्तेन तद्वीर्यममोघतया सद्यः सुतोत्पत्तितोतिलज्जाभीतेन कौशेयान्तरेव पादाङ्गुष्ठेनैव रभसव्यामोहादमर्दीति तत्क्षणादेव ततोङ्गुष्ठदर्शनाङ्गुष्ठमर्दनजन्यत्वेनैवाङ्गुष्ठमात्रपरिमाणाः षष्टिसहस्रं महातपस्विनो वालखिल्या नाम महर्षयोऽभिजज्ञिरे । अथावलोक्य निरुक्तसुव्रातमतिलज्जितः स आत्मभूस्तत्रैव तत्क्षणमेवातिखिन्नश्च बहिर्गतोभूत् । उचितं किलैतत् ।

महतां मुखकार्ष्ण्यं चेत्तत्रैवावस्थितो भवेत् ॥
मर्दनक्षतपातादि ततो देशान्तरं वरम् ॥ १०४ ॥

ततः सर्वसुपर्वपरिषदि महान् हाहाकारोभवत् । अथ भगवान् करुणैकामृतार्णवस्तथाभूतं तं निरीक्ष्य शङ्करस्तावन्नन्दिनमाकार्य चतुराननमहमेनं सद्य एव निष्कल्मषं करिष्यामीत्याज्ञाप्य तद्द्वारा तमुपानयत् । श्लाघ्यमेवादः ।

कुटिलं मलिनं चपलं रागिणमपि निकटगतमपाङ्गमिव ॥
श्रुत्यन्तगमुक्तेज्यः पाति द्युतिमान्कपोल इव सरसम्॥१०५॥

ततोसौ सर्वत्र प्रायः शुद्धिस्तावत्पृथ्वीजलाभ्यामेवार्कलितेति मनसि निधाय स्वसङ्कल्पमात्रेणैव तयोः सारोद्धारं विधाय तत्र पृथ्वीसारेणैकं कमण्डलुं प्रकल्प्य जलसारेणैव तत्पूरणं विधाय

१ नेत्रप्रान्तम् अपङ्गताङ्गं च । २ मृत्तिकया ।

वेदचतुष्टयान्तर्गतयावत्पवित्रतापादकमन्त्रैरभिमन्त्र्यांशतस्तत्रैव यासौ कुटिलापराभिधा गङ्गाख्या हैमवती भगवती गौरीज्येष्ठस्वसा पूर्वोक्तोदन्ता सा तावन्मङ्गलशेखरहीरकीभूतं भगवन्तं विष्णुमाराध्य तत्प्रसादेनैवाहं सुरकार्यार्थं हरवीर्यमपि विधारयिष्याम्येवेतिवादिन्यपि केवलं स्वेन सुरान्प्रतियदुक्तं किमितीयं भवद्भिः शिववीर्यकुमारोत्पादनलोलुपैस्तारकासुरभीतत्वेन विवेकविधुरत्वात्तद्रूपलावण्यादिरमणीगुणमात्रसाकल्यलौल्येन हिमाचलमप्यभियाच्य हरवीर्यधारणानिपुणा वराकीह समानीतेति तावन्मात्रप्रतीकारवादित्वदोषलेशमात्रेणैव त्वं जडा भवेति कथमनेन शापतः सरिद्रूपतां नीतेति सर्वज्ञसार्वभौमत्वेन वक्ष्यमाणप्रकृतोदककर्मकस्वशिरोधारयिष्यमाणतया गौरीगुणकृष्टचेतस्कत्वाद्द्विगुणतदुपबुभुक्षया रसैकरस्येतत्क्षणावच्छेदेनोमावलोकनादिना स्वस्य सर्वभावेन संसक्तत्वाद्यदि प्रमदारूपिणीमिवाहं गङ्गामपि परिणेष्यामि तर्ह्यसावपर्णा[१] कुप्येत तत्त्वनुचितमेव तस्माद्रसरूपिण्या एव तस्याः समुचितः सम्भोग इति च गूढतमाभिसन्धिना निरुक्तां गङ्गामपि सत्यसङ्कल्पतयाऽऽवाह्य तं कमण्डलुं सकलभुवनवर्तियावत्पावनशिरोमणीभूतं यावत्पातकध्वान्तप्रचण्डमार्तण्डमण्डलं मोक्षलक्ष्मीशृङ्गाररसप्रेममूर्तिमन्तमेकीकृतं चन्द्रचूडः परमेष्ठिने प्रादात्। ततश्च ब्रह्मा निरुक्तशिवप्रसादीभूतसकलजलसारपरिपूरितकमण्डलुदर्शनस्पर्शनादिना विध्वस्ताखिलकलुषः सर्वसुरमुनिवरवन्द्योप्यभूत्। अथ भगवानुमासहायः सम्पूर्णं वैवाहिकं कर्म यथाविधि विधाय हिमाचलेन विरचितातुलमङ्गलः सम्पादितदिनचतुष्टयावधिकप्रसाधितसकलदेवर्षिविद्याधरगन्ध-

१ पार्वती।

र्वप्सरःप्रभृतियावज्जगद्वन्द्यवृन्दभोजनवस्त्रालङ्कारप्रदानमुखानिखिलसत्कारः सञ्जातानन्तकोटिब्रह्माण्डमण्डलैकमहोत्साहपरमोत्सवश्च बभूव । अथ तौ वधूवरौ निरुक्तसर्वसुरादिसभायां दण्डशतुर्मुहूर्तमात्रमुर्वश्यादितौर्यत्रिकलास्यं महोत्तमरत्नसिंहासनस्थौ लक्ष्मीसरस्वतीभ्यां धृतच्छत्रचामरौ विष्णुविधिभ्यां विनिवेद्यमानताम्बूलाद्युपचारौ च । तत्र भगवान् विष्णुः साश्चर्यं ससुरकार्यसूचनं सनिखिलजगदिष्टसाधनं चावादीत् ।

आः पार्वत्यप्यपर्णा किल कनकलतासीदपर्णाप्युमेयं
जाता चोमापि गौरी श्रयति शितिगलस्थाणुमेतं पुराणम् ॥
चित्रं सूत्वा विशाखं निखिलसुमनसामिष्टसद्यःफलाप्त्यै
कुम्भाभ्यां भोगमोक्षद्विविधफलकृते चापि वैनायकाभ्याम् ६

अथ भगवानुमारमणस्तावद्धिमाचलेन यथाविधि यथाशक्ति च कृतस्वविष्ण्वादिनिखिलवैवाहिकजनसत्कारानिकरः कैलासाचलसंज्ञकस्वभक्तकल्पितनिजस्थानं प्रति प्रस्थातुमुपचक्राम । तदानीं किल मेनां हिमालयं सखीः स्वमातामहं समेरुमन्यांश्च बन्धुजनानप्युमा तावद्भर्तृगृहं तेन सहैव समहसमारम्भसम्भारोत्सवं गन्तुं प्रोत्सुकापि संप्रष्टुं ह्रीणापि सगद्गदस्वरं सहर्षबाष्पं सपुलकं सस्वेदबिन्दु च किञ्चित्सप्रणामाद्यपृच्छत् ।

नमो वः प्रत्येकं जननि जनक भ्रातृसुहृदः
पदाब्जेभ्यो नित्यं यदतुलकृपातोऽभवदियम् ॥
मयि प्रष्टुं वाञ्छा लघु भवतु संमेलनमितो
जनोयं नोपेक्ष्यः पितृगृहमये स्त्रीप्रियमिति ॥ १०७ ॥

---

१ पर्णरहिता । २ विगता शाखा यस्यैतादृशं षडाननं च । ३ सोत्सवम् ।

एवं गिरिजावचः समाकर्ण्य मेना हिमाचलो मैनाको मेरुप्रभृतयश्च ते सर्वेऽपि तां रत्नालङ्कारदिव्यवसनहिरण्यासंख्यहस्तिहयरथगन्धर्ववरकन्याकोटिदासीस्वर्धेनुप्रमुखयौतकप्रदानपूर्वं तामनन्ताशीर्भिरयोजयन् ।

त्वं वीरसूर्भव भवैकपदारविन्द-
माद्यन्मिलिन्दमनसैव सदैव वत्से ॥
रूपादिगर्वलवमप्यपहाय सेव्यः
कान्तस्त्वया प्रतिदिनं न कदाप्युपेक्ष्यः ॥ १०८ ॥

तदा किल मृडान्या विरहेण मेनादीनां चाश्रूण्यागतान्यप्यनुकूलान्येव मङ्गलोत्सवस्यासन् ।

मेनादेर्विरहभवाश्रुजालमस्याः
स्वाभीष्टानुपमवराप्तिमोदशीतम् ॥
शच्यादेरिव निजनिष्कुटे कृतायाः
स्वर्वल्ल्याः कुसुमलये फलोद्गमेन ॥ १०९ ॥

अथ सरहःसखीनिकुरम्बां तां जगदम्बामुक्तरीत्या समुपादाय भगवान् जगज्जनकः सकलसुरादिनिकरसंवलितः सतूर्यसहस्रघोषं सानन्दवृन्दं सप्रमथादिलक्षावधिगणमुख्यक्ष्वेलं सब्रह्मादिदेवप्रवरविरचितजयकारं समहोक्षादिसर्वदिव्यवाहनत्वरं च कैलासनामकं कलधौताचलं समुपेत्य यथाधिकारमवतिष्ठमानेषु विष्णुविरञ्चिप्रमुखेषु निखिलसुरेषु वसिष्ठादिषु ऋषिवरेषु च पृष्ठतः स्थितासु शच्यादिषु सुरस्त्रीष्वरुन्धत्यादिषु मुनिपत्नीषु च छत्रचामरधारिण्योर्लक्ष्मीसरस्वत्योश्च सत्धोर्व्यजनकरे समीरे मुकुरधरे हिमकरे ताम्बूलकनकरत्नमयसचतुष्पुष्पस्तबककरे

१ स्वकीय गृहसमीपारामे । २ दासी । ३ 'चौकुला' इति भाषायाम् ।

कुबेरे च गायत्सु विश्वावसुप्रभृतिगन्धर्वप्रवरेषु नारदतुम्बरुप्रमुखेषु गानप्रवीणमुनिषु नृत्यन्तीषु चोर्वश्याप्सरश्चतुरासु निवेदयति च नन्दिनि सोपहारतत्तत्प्रणामनिकरे स्तुवति च गीर्वाणगुरुप्रमुखे निखिलवाग्मिवृन्दे चिन्तामणिकदम्बमये महोच्चतमसिंहासने वामाङ्कस्थितया गौर्या सह श्रीशङ्करः समुपविवेश । तत्र च भगवतीं नवोढां निरीक्ष्य भगवतः सत्यसङ्कल्पस्य भक्तद्विजकल्पद्रुमस्य हिमकरमौलेः पुरस्तात्सङ्कल्पमात्रेणैव प्रागुक्तद्रुहिणशापावसानकालानुसरणतः सम्पादितदिव्याङ्गः सरतिरूपवामाङ्गः सगौरीभ्रूदासीभूतकुसुमितबालकल्पलताचापात्मकवीरकराङ्कः सदीक्षणपाणिगौरिमस्मितचिकुरकिङ्करीभूतारविन्दाशोकचूतमालतीन्दीवरात्मकपञ्चसंख्याकशरकरश्चानङ्गोपि साष्टाङ्गप्रणतिकोटीरनुतिष्ठन्नेव स्वापराधशतकोटीः क्षमापयन्नेव च सुबद्धकिरीटाञ्जलिर्गलद्विलोचननीलोत्पलयुगुलगर्भगानन्दोदमकरन्दबिन्दुः प्रादुरभूत् । ततश्च ।

भगवन् करुणामूर्ते द्रुतमयमनुकम्प्य एव दासजनः ॥
दैवैः सह जगतापि च कामः कृपयेति विष्णुरुपतस्थे ११०
दीनदयाम्भोधिरसावप्यनुमन्याम्बुजेक्षणोद्युक्तः ॥
तत्तदुचितसत्कारैस्तदादिसकलान्विसर्जयामास ॥ १११ ॥
अथ गौरीकरालम्बीबिम्बीभूतः शिवः स्वयम् ॥
रत्यगारमगाद्दिव्यसुमनःशय्यमादरात् ॥ ११२ ॥

इत्यच्युतविरचिते श्रीभागीरथीकथाख्ये चम्पूकाव्ये गौरीविवाहवर्णनप्रथात्मा षष्ठो मनोरथः सम्पूर्णः ॥ ६ ॥

---

*१ अरविन्दमशोकं च चूतं च नवमल्लिका पङ्केरुहं तामरसं पञ्चबाणस्य सायकाः । इति कामतन्त्रे ।

—०:०—

अथ कुमारजनुः[1] कथमेष वा कथमुमादिसुतश्च[2] कमण्डलौ ॥
निगदितं वनगाङ्गपयोविधेस्तदपि वा कथमेतदुदीरय ॥ १ ॥
आकर्ण्यैवं वचनं भगीरथस्यावदद्वसिष्ठस्तम् ॥
श्रुत्वा चातकरुतमिव जीवनदः सत्कथाऽमृतं निखिलम् ॥२॥

ततः स भगवानखिलोर्ध्वरेतःशिखामणिभूतः सकलात्मरत्यात्मक्रीडात्ममिथुनात्मानन्दवृन्दवन्दितपादारविन्दद्वन्द्वः स्मरहरः श्रीशङ्करः स्वकीययैवानादिचिच्छक्त्या भगवत्या पार्वत्या सह लोकं लीलाकैवल्यन्यायेन नानाविधवात्स्यायनराद्धान्तसिद्धनिधुवनविधिभिस्तृतीयपुमर्थकैतवेन तुरीयानन्दैकरसः सन् दिव्यसहस्रसंवत्सरानपि सुरतेनैव ज्ञानमयतपोरूपेण निनाय तथाप्यत्र नैवालंबुद्ध्यात्मान्यतरस्याप्यासीत्पराजयः[3] । तदा किल प्रागुदीरितस्य तारकासुरस्य भीत्या परमसन्त्रस्ताः सर्वे ब्रह्माद्याः सुरगणाः सम्मन्त्रयेतः परं किं कर्तव्यं जातेपि भगवतः शिवस्य भगवत्या गौर्या सह महाप्रयत्नशतेन विवाहे ततश्च तस्मिन् सुरतद्यूतेप्यद्यापि दिव्यसहस्रवर्षात्मकसमयप्रतिलङ्घने जातेपि नैव तयोरेकस्याप्यलंबुद्धिलक्षणः सम्पद्यते पराभवो नाम । न च तेन विना हरवीर्यनिर्मोको नापि तमन्तरा तारकासुरहन्तृकुमारोत्पत्तिर्नापि तेन विना तन्मृतिर्नापि तामन्तराऽस्मदुपलक्षितलोकत्रयभयशान्तिश्च तथा यद्येतावत्कालं यथास्माभिस्तारकासुरकर्तृपीडनं क्षान्तमेवमेवाग्रेपि यावच्छिवयोरलम्बुध्यानावदुभयवीर्यैक्येन गर्भधारणादिना पुत्रोत्पत्तिः स्यात्तावत्कालं सोढव्यमेवाथापि यस्याधानमेव दिव्यसहस्रशरदतिक्रमे-

---

१ षडाननजन्म । २ पार्वत्याः प्रथमसुतः । ३ पार्वत्याः शिवस्य वा ।

ष्यद्यापि भाव्येव को नाम तादृगचिन्त्यशक्तिमन्तं कुमारं सुरवरेष्वपि सङ्गरे सहेतेति स एव वैधातृपदान्तमप्येकातपत्रमेव त्रैलोक्यराज्यं करिष्यतीति किं कृतं स्यादस्माभिरेतावन्तमपि प्रयत्नव्रातमासाद्येति तस्माद्यावदेतादृक्पुत्रो नैव सम्पद्यते तावन्मध्य एव किञ्चिद्विक्षेपजातं विधाय युक्त्या स्वकार्यं साधयिष्याम इति अन्तर्यामितया भगवद्भ्यां शिवाभ्यामेवेश्वरत्वेपि सुरतमुख्यविषयसुखस्यैतादृग्दुःखजनकत्वं किं पुनर्जीवत्वे तस्य तथात्वं वक्तव्यमिति भक्तजनांस्ततो विरक्तिमेव समुपदेष्टुं प्रेरितमतयः सन्तः शिवस्यैव भगवतोष्टमूर्तेस्तृतीयमूर्तिं स्वदूतीभूतं वीतिहोत्रमामन्त्र्य भो पावक त्वां पुरोधाय पश्चात्सर्वेपि ब्रह्मादयो वयं सुराः समनुयास्यामः परन्तु पुरस्त्वयैव यत्र रहःस्थाने कैलासमणिसौधादौ भगवन्तौ पार्वतीपरमेश्वरौ क्रीडतस्तत्रानेन रूपेणैव रूपेण तदीयतृतीयमूर्तित्वात्तस्य सर्वात्मत्वेपि व्यवहारे व्यक्तिभेदपरिपालनमर्यादारक्षणावश्यकत्वे तु रूपान्तरेण कामरूपधारित्वाद्वा गत्वा भगवन् करुणाम्भोधर शिशिरकरशेखर त्वया तावत्तारकासुरपरिपीडितजगत्त्रयपरिपालनाय तन्निहन्तुं पुत्रोत्पत्त्यर्थं वीर्यविमोक्षः कार्यः सद्य एवेति ब्रह्मादिसर्वसुरकर्तृकप्रार्थनं तं निवेद्य पुनः शीघ्रमागन्तव्यमुभयोरपि लोकयोः पूजां तुभ्यमेव दास्याम इति लोभेनाग्निं छन्दयामासुः। तथापि स तु शुचित्वेन स्वचेतसि विचार्य तान् प्रत्यवादीत्। अहो तिरश्चोरपि मिथुनीभूतयोर्न भाव्यं धीमता प्रत्यक्षेण किं पुनर्महेश्वरयोरिति शास्त्रादिगर्हितमिदं कथं वा विजानता कार्यं मया कथं वा तादृग्भिर्भवद्भिः कारयितव्यं चेति। तथा हि।

---

१ अग्निः।

प्राणान्तेपि प्राप्ते शास्त्रविरुद्धं न जानता कार्यम् ॥
पततोरप्येकमृतौ न व्यभिचारोऽपरत्र मृतिरेव ॥ २ ॥

अथ तेपि तमूचुरहोप्रागेवैवमेवास्माभिर्विचार्य समभिहितमेव भवन्तं प्रति रूपान्तरेण वा गच्छेति । न हि तेन तदानीं किशोरनीहारकरः स्वशिरःशेखरीभूतोप्यपसारितः शिखी वा त्वं ललाटलोचनतः पुष्पवन्तौ वा दृग्भ्याम् । तस्मात्त्वया रत्यागारोपचारचतुरमेवोचितं किञ्चिद्रूपान्तरमवलम्ब्य केवलमग्र एव गत्वोक्तोदन्तजातं निवेद्यागन्तव्यं पुनर्द्रुतमेवागम्यते चास्माभिः सर्वैरपि ब्रह्मादिभिर्देवैरित्यादिश्य वह्निं पुरस्कृत्य ते सर्वेप्यन्तर्धानशक्तिशालिनः कुबेराचले तावत्प्रमथादीन् नन्द्यन्तान् वञ्चयित्वैव गौरीसहचरीनिकरं दासीसहस्रसंघातं च महाचिन्तामणिमात्रमयमनन्तकल्पद्रुमाविराजमानं भगवतः सर्वेश्वरस्य सुरतागारं दूरतः कृत्वा तत्तोरणमात्राभ्यर्णमाजग्मुः । अथ पावकस्तावच्छुकाख्यस्य शुद्धान्तावस्थित्युचितस्य पक्षिणो रूपं बिभ्राणः संस्तदन्तःपुरगवाक्षद्वार एवागत्याधोमुखः सवेपथुरेव तूष्णीमवतस्थौ । तदा परमकरुणानिधिर्भगवान् महेश्वरस्तावत्तं दूरतोऽवलोक्य प्रहसन्नेव महेश्वरीं भो देवि त्वमिमं देववाक्यादत्रागतं वह्निमेव पश्य शुकरूपिणमिति लीलया गौरीमवादीत् । ततः सा तु परमलज्जिता सती रभसाद् व्युत्थाय शय्यातः शीघ्रमेवान्तःकक्षान्तरं गत्वा परिहितपट्टकूलैव यथावस्थापितकूर्पासकग्रथनपूर्वकानिखिलाभरणा धृतदिव्यमण्डना च पुनस्तत्राजगाम । तावत्कालं सोग्निरपि द्विजरूपी भूत्वा गृहिणो हि ब्राह्मणोतिथिरिति मान्य एवातोयं न मां कामवत्कोपेन भस्मी-

---

१ शास्त्रज्ञेन । २ वार्ताम् ।

करिष्यतीति तत्र किञ्चिदग्रतोवतस्थेऽवतास्थिरे च त्रिकालज्ञाः सर्वे ब्रह्माद्या अप्यमराः सद्य एव तत्पृष्ठतः । ते च सर्वे साश्रयः प्रणिपत्य परमेश्वरं प्राञ्जलयः प्रार्थयामासुः । अयि विश्वात्मन्विश्वेश्वर विश्वपालनाय तारकासुरनिहन्तारं सद्यः कुमारमुत्पादयितुमवश्यं त्वं स्वशुक्रनिर्मोक्षमेवार्हसि कर्तुं न पुनर्ब्रह्मचर्येणोर्ध्वरेतस्त्वात्सहदेव्योमयाऽनिशं तप एवेति । अथ सोपि कृपालुत्वेन तद्वचो बाढमित्यङ्गीकृत्य यदि चेतरे सुरवराः स्थानतः क्षुभ्येत मत्तेजस्तर्हि तद्धारणशक्तिः कुत्र वर्तत इति तान्प्रत्युक्त्वा तावकी प्रथममूर्तिः पृथिव्येतद्धारयिष्यतीति पुनस्तदुक्तमङ्गीकृत्याचिन्त्यचरितः सर्वेश्वरः सद्य एव तत्रैव येन तद्देशमारभ्य यावदुदयाचलपर्यन्तं सगिरिकानना पृथिवी व्याप्ता तादृशमनन्तकोटिचन्द्रार्कविद्युदनलसंनिभं तेजः प्रमुमोच लीलयैव । अथ देवास्तत्पृथिव्या असह्यमेव रौद्रं तेजो मन्वानास्तस्यैव तृतीयमूर्तिं निकटवर्तिनं वह्निं भो अनल त्वमस्य चतुर्थमूर्त्या. वायुना सहैवैतत्तेजः प्रविश्य भर्जितामिव किञ्चित्क्षीणशक्ति कुरु येनेयं वसुन्धरा न दह्येत नाप्यधो यायादित्यग्निं प्रेरयामासुः । तेन च तादृशेन तथाभिरचिते स च तत्रत्यः पर्वतः सितकरसहस्राकरः श्वेत एव सपन्नस्तच्च वनं महत्तरं कोटिचित्रभानूदयसन्निभं शरवणमेवासीत् । ततश्च पुनः शङ्करः करुणाकर एव सुरकार्यमजातमेव मन्वानः पावकस्यापि तेजोभर्जनप्रवृत्तिश्रमं भञ्जयञ्श्चातिथित्वेन प्रथमं द्विजत्वेनावस्थितं तमाहूय वैश्वानर त्वं मुखं स्वकीयं विदार्यैतद्वीर्यं गृहाणेति तमाज्ञाप्य विदारिते तन्मुखे भूरितरं तत्प्राक्षिपत् । अथ सर्वे ब्रह्माद्याः सुरगणाः

---

१ रेतः । २ शिवस्येदमित्यर्थः ।

सर्षिगणाः सासुरगणाश्च क्षुब्धाविव पार्वतीपरमेश्वरौ मत्वा प्रणिपातशतपुरःसरं तं भूरितरं तुष्टुवुः । ततस्तु शिववामपार्श्व एवावस्थिता भगवती चाण्डिकाऽमर्षकषायितनेत्रा[1] सती सर्वानेव सुरान् भवन्त इतः परं सर्वेपि स्वस्वभार्याभ्यो मैव सन्ततिं लभन्त्वप्रजस[2] एवेतः पर सर्वसुरस्त्रियो भविष्यन्ति यन्मत्पुत्रोत्पत्तौ युष्माभिः स्वार्थैकपरैः केवलमरच्ययं[3] प्रत्यूह इत्यशपत् । एवं पृथ्वीमपि नन्वप्यसौ रे धरे त्वमपि नित्यबहुरूपैव बहुभोग्यैव गणाङ्गनेव भविष्यसि यतो यतो मदपत्यमनिच्छन्त्यतस्तवापि अपत्यप्रयुक्तप्रीत्युत्कर्षो नैवेतः परं स्यादिति शशाप । युक्तमेवैतत् । अन्यथैषामस्याश्च देवतात्वेपि प्रकृतमहापराधनिष्कृतिर्जन्मसहस्रैरपि दुर्वारैवेति निरुक्तशापव्याजेन जगज्जनन्या भवान्याऽनुकम्पितमेव तत्र न तु वास्तविकं कुपितमपीति । तथा हि

महतामुदयात्कदापि चेत्किल कोपोपि हितं स नेतरत् ॥
अति तापयति प्रजास्तपे[4] तपनो यत्तदु जीवनाप्तये ॥ ४ ॥

तदा प्रभृति सर्वेषामपि ब्रह्मविष्णवादीनां देवानां नैव स्वकान्ताभ्यः सुतोत्पत्तिरासीद्येतु जयन्तश्रद्धादेवाभिधवैवस्वतनलकूबरमणिग्रीवादयः पुत्राः पुरन्दरभास्करकुबेरप्रभृतीनां प्रसिद्धास्ते तु तत्प्राक्काल एव पौलोमीप्रमुखाभ्यस्तत्पत्नीभ्यः सञ्जाता न तु तदुत्तरनिति निर्णीयते ।

अथ भगवानिन्दुमौलिस्तत्र गौरीमतिव्रीडितां कुपितां चालक्ष्य भक्तवात्सल्यात्तत्प्रसादनार्थं तत्पितृगृहे निकट एव प्रकृतकैलासीयविहारागारापेक्षया प्रत्यग्दिग्गतं नीहारधरीय[5]स्फाटिक-

---

१ क्रोधेन रक्तनयना । २ न विद्यते प्रजा सन्ततिर्यासाम् । 'नित्यमसिच्प्रजामेधयो'रित्यसिच्समासान्तः । ३ अरचि–अयम् इतिच्छेदः कर्मणियङन्ता लुङ् । च्लेश्चिण् चिणो लुक् । ४ तपे ग्रीष्मे । ५ हिमाचलसम्बन्धि ।

शिखरं प्रतिविलासकैतवतत्त्वानुसन्धानलक्षणनिर्मितोभयतपःप्रा-ञ्जुर्याचारार्थं सद्यः समगाद्रेमे च तत्र परमैकान्ते लोकोत्तरकान्त-या सह तया कान्तया निरन्तैरायं सन्ततमतितराम् । ततो ब्र-ह्मादयो हर्षशोकोभयक्रान्ताः सन्तः स्वस्वस्थानान्येवाजग्मुः । अत एव ।

नैव स्वार्थचतुष्टयार्थमपि धीः कार्या क्वचिद्धीमता
तुच्छस्यापि च लेशमात्रमपि वै हन्तुं हितं कुत्र चित् ॥
किं वाच्यं पुनरीश्वरस्य तदिति स्यादन्यथा त्वन्यथा
शास्त्रे तारकभीतदेववदिदं लोकेऽहि पेव्याखुवत् ॥ ९ ॥

ततः पुनरपीन्द्रादयो देवा भक्षितलशुनन्यायेनात्यन्तचि-न्ताकलाः सन्तश्चतुराननमुपगम्य तं प्रति स्वदुःखं विनिवेद्य तेन यदुक्तं भगवत्या पार्वत्या देवानां स्वपत्नीषु पुत्राज-ननमिति तदन्यथा नैव भविष्यत्यतो यदि भवतां प्रतारकासुरव-रसंज्ञामात्रातारकहन्तृसेनापत्यपेक्षा तर्हि भवद्भिः शिवरेतःपान-प्रमन्थरः पावक एवास्यामुमाज्येष्ठभगिन्यां हैमवत्यां कुटिलापर-नाम्न्यामस्मच्छापेनापगात्वं प्राप्तायां गङ्गायामेव हरवीर्यनिषेकेण भवदभिमतसेनान्युत्पादनार्थमभ्यर्थनीयइत्याज्ञप्ताः सन्तस्तमान-म्य पूर्वोक्तं हरसुरतस्थानकैलासप्रस्थमागत्य हरवीर्यपानेन परम-तरभारभराक्रान्तमतितरां तत्तेजःप्रभावतः सदह्यमानमनलं निरुक्तरीत्या गङ्गायां पुत्रोत्पादनार्थं सम्प्रार्थ्य तेनोरीकृतगिरः स्वस्वालयानाययुः ।

अथ सोपि ब्रह्माणमप्येतत्प्रष्टव्यं स्वयमेव नोचेदेकेनापरा-धेनेयमवस्था सपद्येव सम्पन्नान्यार्कि वा भविष्यतीति न जान इति मनीषया शनैर्जिगमिषुर्वर्त्मनि सैव दैवात्कुटिल नाम्नी गौ-

१ निर्विघ्नम् । २ सेचनेन ।

री ज्येष्ठस्वसा गङ्गा लीलावशान्मूर्तिमत्येव मिलितेति तां प्रति भो कुटिले हैमवति गङ्गे त्वमेतन्मयि महेश्वरेण निक्षिप्तं दुर्धरतेजो मामहरहर्दहति भास्वत्तरं चेति महासत्त्ववती गौर्या अपि ज्येष्ठस्वसेति तदिदं मया निषिच्यमानं गर्भं धारय स तावदुमाया अपि भगिनीपुत्रत्वादिना परमप्रेमास्पदीभूतो भावत्क एव भविष्यति भूरिभाग्यभागी सर्वगीर्वाणसेनापतिस्तारकहन्ता पुत्रस्तदिदं ब्रह्मादिदेवकार्यमपीति सम्प्रार्थ्यैतदग्निवाक्यश्रवणोत्तरं स्त्रीस्वाभाव्येन तया निजप्रार्थनं मन्दस्मितमात्रेणैवाङ्गीकृत्यानेन रूपेण महदेतच्छार्वं वीर्यं वह्नेरप्यस्य दुःसहमिति मया तावद्धर्तुं शिरीषकुसुमाधिकतमसुकुमाराङ्ग्या कथं वा शक्यमथापि देवकार्यवशान्महापुत्राप्तिलाभात्प्राग्ब्रह्मणा किमियं वराकी शाम्भवं[1] तेजो धारयिष्यतीति तिरस्कृतया मया यत्प्रतिज्ञातमहं नारायणमाराध्य महातपःप्रभावेन भार्वमपि धारयिष्याम्येवौजः स्वगर्भ इति तदवसरस्याप्यनायासप्राप्तत्वाच्चेदमवश्यं तदनुकूलं रूपान्तरं विधायैव धारणीयमिति धिया बहुतरस्रोतशालिमहत्तममनुत्तममेव ब्रह्मशापसम्पन्नं तल्लोकवर्त्यापगास्वरूपमत्रापि प्रकटीकृत्यास्मिन्मदम्भसि निक्षिप त्वमेतद्वीर्यमित्युक्तस्तया योऽयोनौ रेतः सिञ्चतीत्यादि श्रुतनिषेधभीतः शिवेनेश्वरत्वात्तथा कृतेपि जीषकोटिनिविष्टैर्ब्रह्मिष्ठैरपि लोकसङ्ग्रहचिकीर्षुभिः कथं कार्यमिति चिन्ताकुलस्वान्तस्तत्कूले[2] एव यावन्मुहूर्तमुपविष्टस्तावदन्तर्यामीश्वरप्रेरितान्तःकरणाः श्रीमद्वासिष्ठेतरेषां षण्णां मुनीनां कृतिकानाम्न्यः षट्पत्न्यः स्नानाद्युद्देशेन ऋतुस्नाता एवाकस्मात्तत्रागताः सन्यः स्वभावतश्चित्रभानुं तत्रापि

---

१ भवः शिवस्तस्येदम् । २ तीरे ।

हरवीर्यप्राशनप्रभावजनितलोकोत्तरतेजसं विप्ररूपिणं तमालोक्य रहोदर्शनादिवशात्कामविह्वलाः सत्यस्तं सुरतार्थं सहसा सद्य एवाभत। तास्तु तत्कालमेव षडप्यलौकिकान्तर्वत्नीसुषमाशालिन्योऽपि तत्तेजसाऽतितरां तप्यमानाः सत्यः स्वगर्भं धारयितुं तत्क्षणमप्यशक्नुवन्त्यः परस्परं सन्मन्त्र्याग्निसान्निधान एष निरुक्तगङ्गाम्भस्याविश्य स्वस्वाङ्गपीडनैः प्रसूतिकारीत्यैव षडपि कुमाराकाराणि शावतेजांसि प्रक्षिप्य स्नात्वा स्वस्वाश्रमस्थानानि गन्तुमुपचक्रिरे ॥ ऐतिहासिकास्त्वाहुर्निरुक्तावस्थो गङ्गातीरोपविष्टोऽग्निस्तत्र स्नातुं गता अरुन्धत्यादिसप्तर्षिकान्ताः समवेक्ष्य तत्सौन्दर्यादिनातिक्षुब्धमानसोऽपि तत्पातिव्रत्यादितपोभीत्या तत्प्रार्थनादिना स्वकाम पूर्तिमकुर्वाण एव कामज्वरपरिरुग्णः स्वगृहमगात्। ततः स्वाहाख्यतज्ज्येष्ठपत्न्या तन्निमित्ते रहसि परमप्रेम्णाऽतिनम्रया पृष्टे तेन तदैव यथावत्तस्मिन्निवेदिते तया हन्ताः समभिसारयिष्याम्येव सद्यः श्रीमत्पादमिति प्रतिज्ञाय स्वतपःप्रभावात्क्रमेणादित्यहल्यानसूयारेणुकादिषडर्षिस्त्रीरूपाणि धृत्वा प्रतिरात्रं ततः प्रमुदितात्सुरतेन गर्भं सम्पाद्य तं तं गर्भं गङ्गायां निक्षिप्य सप्तम्यां रात्रावरुन्धतीरूपं धर्तुं रुन्धच्छक्तिकया सत्या स्वपतिर्यथावत्स्वकृत्यं प्रति प्रत्यबोधितोभूदिति तत्र कश्यपादिभिरदित्यदितितत्पतिभिर्योगमहिम्ना विज्ञाते च्छायाग्राहिन्यायेन प्रतिमोपभुक्त्यपराधेनापि ताः कृत्तिकाभिधा विधानपूर्वकमेव परित्यक्ताः पूजिता च भगवत्यरुन्धती महासती सप्तभिरपि तैरिति।

अथ भगवती हैमवती गङ्गापि स्वसम्पर्कादिना पुनः पिण्डीभूतं तत्तेजो धारयितुमशक्नुवाना कदाचित् स्वकूलवर्तिनमग्निं प्रत्येतत्स्थापनस्थलं दृष्ट्वा तेनोदयाचलमारभ्य कैलासपर्यन्तं हि-

भवत उत्तरपार्श्वभागे त्वमेनं गर्भं सन्निवेशयेति समुपदिश्य यथा कामं गमने कृते सति स्त्रीस्वाभाव्याद्धरवीर्यधारणाभिमानाच्च महाधैर्येण तथैव दिव्यपञ्चसहस्त्रवर्षपर्यन्तं सोढ्वापि तद्दुःसहत्वं तं गर्भमात्मजठरे जलरूपमपहाय प्रागुक्तदिव्यस्त्रीरूपेणैव धारयन्ती सती कदाचिच्चतुराननदिदृक्षया सत्यलोकमगमत् ॥ ततस्तेन गर्भिणीं तां दृष्ट्वा सर्वज्ञत्वालौकिकतद्भास्वरत्वाभ्यामवधारिततत्त्वेनापि व्यावहारिकरीत्यैवायि गङ्गे केनायं त्वयि निहितोऽस्ति गर्भ इति पृष्टा सती तं प्रति भगवन् भार्गमिदमोजः शोचिष्केशेन धारयितुमशक्तेनैव कृतिकाद्वारा मयि निहितं तद्दिव्यपञ्चसहस्त्रसंवत्सरपर्यन्तं धारयामीत्यधुना गर्भस्य प्रसवकालो वर्तते तथापि कुत्रातियोग्यस्थले तावदेनमहं प्रसूयामिति पृष्ट्वा कैलासमारभ्योदयाचलावधि हिमवदुत्तरपार्श्वे श्वेतपर्वतनिकटे सूर्याग्निसहस्त्रसन्निभं दिव्यं पूर्वं हरवीर्यनिक्षेपैकजन्यं महच्छरवणमस्ति तत्रातिविस्तृते उदयाद्रिनिकटे श्वेतपर्वतशिखरोपान्ते दशवर्षसहस्त्रं गर्भधारणकाले जात एव प्रसवविधिनैनं गर्भं संस्थापयेत्याज्ञप्ता सती भगवती हैमवती गङ्गा तावत्कालं प्रतीक्ष्य सम्प्राप्ते सति प्रसूतिकाले निरुक्तशरवणं गत्वा सुखेनैव पुनराप्यं[1] रूपं कृत्वैव स्वस्त्रोतोभ्य एवालौकिकतेजोमयं गर्भमुत्सृज्य तस्यास्य बालस्य महाप्रभावत्वेनैव स्तन्यादिदानमकुर्वाणैव पुनर्ब्रह्मलोकमेवागत्य तच्छापवशादापोमय्येवास्ते । तत्र तु ।

शरजन्मासौ रेजे तृतीय इव पुष्पवानुदयगिरिगः ॥
यद्वा विरागजन्मा निजात्मनो बोध इव मूर्तः ॥ ६ ॥

तत्र तत्प्रसवजन्याः काञ्चनमुख्याः सकलसप्तधातवः पर्वता-

१ उदकमयम् ।

यमाना एवासन् ॥ तदारभ्यैव हेम्नो जातरूपसंज्ञासीत् । अथ तं कुमारमिन्द्रादयः सर्वेदेवाः सञ्जातमवलोक्य याः प्राक् षट्कृतिकास्तन्मातरः प्रोक्तास्तावत्तदुत्तरं स्वस्वाश्रमं गताः पतिभिर्विकृतरूपनिरीक्षणेन पूर्वोक्तैतिहासिकोदन्तरीत्या छायाग्राहिन्यायोपभुक्तिविषयकयोगजन्यर्तम्भराख्यविज्ञानेनादित्याद्या वा पापभीत्या निराकृताः सत्योऽतिदुःखितास्तत्रैव गङ्गातीरे तपः कुर्वतीः प्रति नारदमुखेन भो कृतिकाः किमिति भवत्यः शोकाकुलाः स्वदोषान्वेषणतः सन्ति यदसौ भवतीनां कुमारः परमतेजस्वी सकलपुण्यैकपुञ्जः सञ्जातोस्ति भगवान् स्कन्दः शरवणेधुनोदयगिरिपरिसरवर्तिनीति तद्दर्शनमात्रेणैव सर्वदोषप्रमोषो भविष्यतीत्यतस्तूर्णं तत्रैव गम्यतामिति तास्तत्र प्रेष्य तं प्रति पयःपानार्थं मुमुदुः ।

अथ कृतिकाः परमोत्सुकाः सपदि तत्र गत्वा तत्रागतैरिन्द्रादिदेवैः सहायं पुत्रोस्माकं सर्वासामप्यस्त्विति समयं विधाय तैर्बाढमित्यनुमोदिताः सत्यः सद्यस्तद्दर्शनमात्रेणैवाविर्भूतस्तन्याः षडपि तं पयः पाययितुं समकालमेव यदा समुत्सुका आसंस्तदा सोपि हरधरा वैश्वानरा कृतिका गङ्गा शरप्रयुक्तैर्वा षट्कृतिका गर्भावस्थितिप्रयुक्तैर्वा शास्त्रैरिव षड्भिर्मुखैः षण्णामपि मातॄणां स्तन्यं निपीय ताः प्रति वास्ताविकशुद्धिपद्धतिमद्वैतात्मबुद्धिमुपदिश्य निकटवर्तिनौ स्वपितरौ गौरीहरावभ्युपेत्य तत्रागतैर्ब्रह्मविष्णुप्रभृतिसुरगणैः कश्यपादिभिर्निखिलमुनिगणैश्च हिमाचलप्रमुखस्वमातामहादिसम्बन्धिभिश्च पार्वतीपरमेश्वराभ्यामप्यतिमुदिताभ्यां कृतनामकरणादिसंस्कारः स्वपितृचरण एव संपा-

१ प्रतिज्ञां ( नियमं )। २ दुग्धम् ।

दितसकलविद्यश्च ब्रह्मादिभिर्देवसेनापतित्वे समभिषिक्तः क्षणा-देवाहनच्छिखिवाहनः शक्तिधरः कुमारस्तारकासुरं सकलविश्व-मप्यानन्दयामास । स्वप्रतापप्रचण्डचण्डांशुदयेनैव । अत एव । स हि शक्तिधरोप्यपास्तशक्तिर्जगतां तारकदोपि तारकारिः ॥ शिखिजोपि शिखीज्यपादरेणुर्जयति प्रौढतमोप्यहो कुमारः॥७॥

ततश्च ।

गौरी प्रासूत पुत्रं किमजिनमनया हर्षमैभं प्रभाते-
नेनेभास्यं षडास्यादनु शुभजनुषं ब्रह्मविद्येव मोक्षम् ॥
तेनोद्वाहाय्य चाग्रे गुणमणिनिधिना सिद्धिबुद्धी सुवध्वौ
ताभ्यां सूतौ च दृष्ट्वा रविशशिसमभौ लाभलक्षौ ननन्द॥८॥

अथ ब्रह्मकमण्डलौ या पूर्वं भगवता पार्वतीप्राणनाथेन तद्वि-शुद्ध्यर्थं गङ्गा सकलाम्मयतत्त्व परमरसरहस्यरूपं यावदम्भान्तः-पातित्वेन कुटिलाख्याया हैमवत्या गंगाया ब्रह्मशापेनात्तमाप्ता-या अप्यंशतः सारसङ्ग्रहस्य सामान्यतः सम्भवेपि निरुक्तरीत्या तस्यां गौर्याः सर्वस्त्रीगुणमणिमहाकरीभूताया अपि ज्येष्ठत्वेन प्रागुपवर्णितस्ववीर्यधारणोत्साहातिशयसूचितस्वविषयकप्रीत्यति-शयेन च तदाधिक्यवशादेव गङ्गापदव्यवहार्या यावत्पृथ्वीतत्त्व-कल्पिते तत्र निधाय त्रयीनिष्ठयावत्पवित्रीकृतिनिपुणगणैः स्वयमेवाभिमन्त्र्य विरञ्चयेर्पितासीदसौ तावद्बलिच्छलनाय त्रिवि-क्रमरूपं प्रकटयतो विश्वरूपस्य हरेर्दक्षिणचरणेन सकलमूर्लोके व्याप्ते सति वामपादे द्युलोकं व्याप्तुमूर्ध्वीकृते तत्र सत्यलोके निवसता पितामहेन तेन स्वपितृपादपद्ममिदमत्रागतमतः किम-

१ त्यक्ता । २ करिणः । ३ अयं विवाहः कुत्रापि न लौकिकोदन्तत्व चिन्त्यः ।

स्य सकलैश्वर्य निधानस्यापि पामरतरेण मया सत्करणीयमिति दुरन्ताचिन्ताक्रान्तत्वेपि भगवता तेनैवान्तर्यामितया प्रेरणे कृते सत्यहो मय्यस्त्येव किञ्चिदेदर्हं भगवन् महेश्वर करुणैकरूपमचिन्त्यमहिमकमण्डलुस्थं जलमिति सञ्जातस्मृतिना यावत्त्रयीरहस्यार्घ्यमन्त्रैः सत्तत्त्वानुसन्धानं तत्राभिषिच्यते तावदेव तदङ्गुष्ठनखप्रतिपदमृतमयूखनिर्भिन्नहिरण्मयब्रह्माण्डकटाहोर्ध्वगताम्मयावरणेनान्तःस्रवदमृतधारासम्मिश्रितमिति ततो महापगा प्रवहन्ती विष्णुपदीति संज्ञया तन्मकरन्दायमानत्वात्प्रसिद्धा बहुयुगसहस्रोपलक्षितकलिनैव रसैकरूपिणी भक्तान्प्रति भक्तिरेव मुमुक्षून्प्रति मुक्तिरेवाशनैरेवाभिसरन्ती शिशुमारचक्रशिरोहीरीभूतध्रुवलोकमागत्य तेनातुलप्रीत्या महाभगवद्भक्तसार्वभौमेण प्रणत्यादिसर्वोपचारैरभ्यर्चिता ततः शिरोनिमज्जनैरवगाहिता निपीता च सती ततः सत्यलोकवर्तिन्यां पूर्वोक्तरीत्या ब्रह्मशापेनापगात्वमापन्नायां वेदचतुष्टयमन्त्ररूपवाङ्मयबन्धनैः स्वप्रभृतिसकलसुरमुनिवरनिकरसंविहारपरिनिष्पत्त्यर्थं तेन संस्तम्भितायां हैमवत्यां गङ्गायां पूर्वोक्ततदशप्राधान्येन हराङ्गसंगलालस्येन च संस्थितस्थूलरूपां शमप्युदाय गन्तुं संमित्य तत्र तल्लोकवासिपरमहसकृताभिषवसुषमां समासाद्य ततः कश्यपादिसप्तमहर्षि मण्डलमाहत्य तत्रादित्याद्यादित्यादिमातॄणां अनसूयाऽहल्यारेणुकाऽरुन्धत्यादीनां तत्पत्नीनां अङ्गरागसङ्गभक्षणनीलरक्तपीतश्वेतशतच्छदायमानकल्लोलविलासकितवितमधुव्रतव्रातशतानिस्वदर्शनस्पर्शनस्पर्शनादीनां कैवल्यवल्लीरसनिषेवितामानीय विलसदप्सरःसङ्गनिसंघटितानन्तसुरप्रवरनिकरपरिमण्डितासंख्यविमानमाला सती गगनतलं रत्नघटितमुक्ताहारेणैव भूषयन्ती सुधाकरबिम्बमाप्लाव्य तदुत्तरं भास्करमण्डलं शिशिरीकृत्याथ सुमेरु-

शिखरे निपत्य प्राच्यादिचतुर्दिक्षु सीतालकनन्दाचक्षुर्भद्राभिधै-श्चतुर्भिः प्रवाहैः शान्तिसुन्दरी शृङ्गाटक इव वीथिश्चतुष्प-थासीत् ।

अथान्तर्यामीच्छालवकलितसम्प्रेरणतया
श्रुतिः प्रादुर्भूता जलजनिजनेश्चेतसि पुरा ॥
गलं प्राप्य स्पष्टा बहिरपि चतुर्भिः सुवदनै-
र्ऋगाद्यात्मा लोकानवति भयतः पावयति च ॥ ९ ॥

ततस्तत्र सत्यलोकाख्यब्रह्मलोकोत्तरमेरुमध्यशिखरवर्तिब्रह्म-सदनापरनामकब्रह्मपुर्याश्चतुर्दिक्षु गच्छत्सु प्रवाहानिलवेगेन वि-ष्णुपद्याख्यगङ्गा चतुर्षु भागेषु मध्ये सीताख्यः प्राग्गामी प्रवाह-स्तावन्मेरुप्राग्वर्तिकेसराचलादिशिलोच्चयशिखरेष्वधोऽधः प्रचर-न् भद्राश्ववर्षमध्यतः प्राग्लवणाब्धिं समगात् । तद्वन्माल्यवत्सा-नुतः प्रपतन्ती केतुमालवर्षमभिलालयन्ती चक्षुः प्रत्यक्क्षारोदं प्राविशत् । एवं भद्रापि शृङ्गवतः पर्वतस्य शृङ्गादवतरन्ती उत्तरान्कुरूनुत्तीर्य उदग्लवणोदमगमत् । तथाऽलकनन्दा तु निरुक्तब्रह्मसदनान् मुक्तियुवतिकबरीमालतीमालेव गन्धमादनकूट-शालिनी हेमकूटशिखरविहारिणी पौलोमीव मेरूपान्तेन्द्रलोका-ख्यस्वर्लोकवर्तिनन्दनवनासन्नस्वच्चारिणी मानससरोवरविलासि-नी चागणितसुरसुन्दरीसंसेव्यमाना चानेकविधान् राज्यलक्ष्मी-रिव दाक्षिणान् भूभृतः समाछाद्य स्वातिरंहसा हिमवन्तमुपा-गमन् ।

अथ भगवान् शङ्करस्तां भक्तकामैकपूरकानुकम्पा मूर्तिः स्वद-

---

१ चतुष्पथः । २ जलजनि कमलं तस्माज्जनिर्जन्म यस्य तस्य ब्रह्मण इत्यर्थः । ३ विन्ध्यपर्वतशिखरात् । ४ त्रिकूटात् । ५ शिखरात् । ६ राज्ञः शिखरांश्च ।

त्तरससर्वस्वत्वगौरीज्येष्ठस्वसृहैमवत्यभिधप्रागुक्तकुटिलाख्यगङ्गांशप्रधानत्वभगवत्पादाङ्गुष्ठनखानिर्भिन्नब्रह्माण्डकटाहान्तःस्रवद्बहिर्दिव्याम्मयावरणोदकधारासंक्षालिततच्चरणारुणनलिनपरागानुरञ्जितपरमतीर्थीभूतविष्णुपदीत्वधिया च स्वकपर्द एव चिरं बभार । यच्चान्यत्र श्रूयते प्राक्तनस्तद्भागं देवर्षिपितरो जगृहुः पाश्चात्यः पुनर्ब्रह्मकमण्डलावेव पुनः प्रविष्टः औत्तरस्याङ्गीकारो विष्णुनैव कृतो दाक्षिणात्येन तु पुनः शिवशेखर एव रेज इति तदपि केसराचलादिविहारि देवमुनिपितृणामानन्दाय चिरतरं भवन्त्या एव सीताभिधगङ्गायाः पूर्वलवणार्णवप्रवेशासम्भवेन तथा माल्यवच्छिखरपरिपतनतः प्रत्यग्जिगमिषोश्चक्षुरभिधगाङ्गप्रवाहस्यापि ब्रह्मणा महोत्कटतरमिदं मत्सर्वस्वं वारि हरप्रसादीभूतत्वेन स्थितं किं पुनर्विश्वमूर्तेर्मत्पितुश्चरणारविन्दपरागपटलपरिललितं चेति धिया स्वस्याखण्डं प्रत्यगेकनिष्ठां विस्पष्टीकर्तुमिव तन्मात्रप्रवणस्य तस्यालौकिकतीर्थीभूतस्यांशे स्वकमण्डलुपूरणीकरणकल्पनसम्भवेनैवं भद्राह्वगाङ्गस्रोतस उदक्प्रवणस्य शृङ्गवद्गिरिशिरोहीरहारीकारपूर्वकं क्षारोदप्रवेशेपि तावत्पातालगत्यैव तत्रत्यकूर्मक्रोडादिरूपिणा विष्णुना ग्रहणसम्भवेन चोपपन्नमप्युपपन्नतरमेव ।

तदवधि ववृधे गिरीन्द्रजाया
मनसि महान् किल कोपि मत्सरद्रुः ॥
नवनीतकृतापि चेत्सपत्नी
भवति महाविपदे किलाङ्गनानाम् ॥ ९० ॥

किं च ।

---

१ नम्रस्य । २ हीरकमालामूतम् ।

हिरण्मयजटातटस्फुटितहीरहारावलिं
निरीक्ष्य हरशेखरे हरिपदारविन्दाम्मयीम् ॥
चकार किल चण्डिकाप्रकुपितामिवैनां क्षणा-
न्नवोदितशरद्द्रविद्युतिकपद्मरागात्मिकाम् ॥ ११ ॥

अपि च ।

एषा रोषकषायिता प्रतिदिनं मत्प्रेमभेदभ्रमा-
दित्यालोच्य शिवोऽर्धममात्मवपुषो गौर्यै ददौ तन्मुदे ॥
तत्रापि स्वकचप्रसाधनमिषाद्गङ्गां जटासु स्थितां
नित्यं सा समताडयद्ध्रुवमये विश्वामृतप्राप्तये ॥ १२ ॥

ततः किल शैलबालिका बाहुलेयं गजाननं जयां चैकान्ते नीत्वा तैः सह संमन्त्रणाय तानिदं निजदुःखं न्यवेदयत् ।

अये स्कन्देभास्यावयि सखि जये किं खलुमया
तदारात्कर्तव्यं बत सपदि येन व्यपगमेत् ॥
सपत्नीयं मेद्य प्रियाशिरसि यारुह्य रमते
कथं सोढुं शक्यं प्रतिदिनमिदं दुःखमतुलम् ॥ १३ ॥

अथ भगवान् गजाननः साक्षात्सिद्धिबुद्धिधवः श्रुत्वा स्वमातृवचनमिदं वचनमवदत् ।

मातर्मा खिद मास्ति तज्जगति यद्यत्नेन नो लभ्यते
त्वत्पुत्रेऽपि गणाधिपेऽपि मयि चेद्विघ्नेश्वरे सत्यपि ॥
दुःखं तावकमप्युपैति न शमं सद्यः सपत्नीभवं
स्तन्यं पुष्करतस्त्वदीयमभितः पीतं भवेन्निष्फलम् ॥ १४ ॥

एवमसौ स्वमातरमुमां समाधाय यावत्किञ्चित्कालं नैजान्तःकरण एव तदुपायपर्येषणपरायणस्तावद्भूलोके चतुर्विंशतिवार्षिकी पाकशासनाय गौतमदत्तसहस्रभगवेत्त्वादिशापजन्यतत्क्षोभानि-

१ कार्तिकेयम् । २ सहस्रभगयुक्तो भवेत्यादि ।

मित्ताऽऽकस्मिकी वा किञ्चित्कारणान्तरजन्या वाऽनावृष्टिरेवासीत् । वस्तुतस्तु गौरीगणेशयोश्चिन्तैवात्र हेतुरिति वयं तर्कयामः । तथा हि ।

यां वै त्रिलोकजननी यदि सैव दुःखा-
च्चिन्तातुरा जगदिदं न तथा कथं स्यात् ॥
किं कीटकोटिविवशा कृतमूलिकायाः
कुत्रापि पल्लवगणोवगतो लतायाः ॥ १५ ॥

अपि च ।

यावत्कार्यकुलं तु सिध्यति नृणां विघ्नो न चेत्स्यात्क्वाचि-
त्सामग्रीनिचयेपि सोपि भगवान् विघ्नेश्वरोपि स्वयम् ॥
चेच्चिन्ताचयचक्रवक्रनिजहृन्नकैकदंष्ट्रावशः
स्याल्लोकस्य कथं न विघ्ननिकरैराक्रन्दनं तत्क्षणात् ॥१६॥

अथापि तदानीमुक्तानावृष्टितः सकलभूतलवर्तिस्थावरजङ्गमात्मकजीवव्रजे निर्बीजत्वमिवोपयातेपि केवलमेकोसौ गौतमाश्रम एव सर्वसमृद्धिमंडित आसीत् । यतः । तत्र पुरा सृष्टिकामेन स्रष्टा सप्ततन्तुः सम्पादित इत्यद्यापि स गिरिस्तन्नाम्नैव प्रथितः स्थलं च तद्देवयजनमित्युच्यते । उचितमेवैतत् । तथा हि ।

यत्रास्ति बीजं प्रबलं क्व तत्र सामान्यहेतोः सततव्यपेक्षा ॥
वृष्टिं विनाप्यस्ति वसन्तकाले प्रायेण सर्वद्रुमपल्लवादिः ॥१७॥

तत्र हि ।

आयातानतिथीन्मुनिः सविनयादर्घ्यादिनाऽभ्यर्चयन्
भावत्कं[1] करवाणि सेवनमहं शिष्यादिवत्प्रत्यहम् ॥

---

१ भवदीयम् ।

इत्याभाष्य चकार तादृशमसौ भूयः स्वसङ्कल्पतः
किं किं नाम चिदेकचिन्तनतपश्चिन्तामणेर्नाप्यते ॥ १८ ॥
अतः ।
जगतीतलगा मुनीश्वरा निखिलास्तत्र समेत्य संस्थिताः ॥
निजधर्मपरायणाश्चिरं पितृवत्सोपि च तानपूजयत् ॥ १९ ॥
तत्र तु ।
क्वानावृष्टिरहो न यत्र कलितो व्याधिर्न चाधिः क्वचि-
न्नो शोको न भयं कदापि च नृणां कालोपि नाकालिकः॥
ओषध्योप्यभवन्नभीप्सितफलाः सद्यः पुनः प्रत्यहं
यद्यद्यस्य समीहितं तदुचितं तेनाशु तत्राप्यते ॥ २० ॥
ततश्च ।
वाणीवास्या स कीर्तिः परमशुचितरा लङ्घितोद्यद्विजेन्द्रा
विश्वं व्याप्नोति देवैरपि यदसुलभं गौतमः साधयेत्तत् ॥
निश्चित्यैवं गजास्यः स्वमनसि जननीमप्यलं संनिवेद्य
भ्रात्रा साकं च तत्रागमदथ सजयश्छद्मविप्रादिरूपः॥२१॥

अथ भगवान् विघ्नराट् ब्रह्मसूत्रभस्मरुद्राक्षकुशकमण्डलुद्वित्रिवसनभूषितातिजरत्कृशतरविप्रवेशो गजाननो ब्रह्मगिर्युपकण्ठमण्डितं गौतमाश्रममुपागत्य गौतमादीनखिलमुनीन् प्रणम्य कानि चिद्दिनानि उषित्वाऽन्तर्हितं सजयं बन्धुमापृच्छ्य तान्सर्वान्मुनीन् प्रत्यौदासिन्येनैवाहो कतिकालमस्माभिः परान्नपुष्टैरत्र गौतमाश्रमे स्थातव्यं यदि सर्वेषां भवतां रोचते चेदितोगन्तव्यमेव सर्वैरप्यस्माभिरिति रहस्येवावदत् । ततस्ते सर्वेपि ब्राह्मणाः स्वस्वमनसि बुद्ध्यधीशेन तेन विप्रकैतवकैरिवराननेन

१ ब्राह्मणरूपधारिणा गजाननेन ।

समुपदिष्टं तदतिसमभीष्टमध्यवस्य स्वस्वस्थानजिगमिषवो गौतमं प्रत्यायि महर्षे वयं सर्वेपि इतः परं स्वस्वाश्रमान् प्रति गन्तुमुत्कण्ठिता इत्येतावत्कालं भवान् पुत्रनिर्विशेषपालितान्नः समनुज्ञातुमर्हतीति प्रार्थयांबभूवुः । स तु निसर्गकारुणिकः किमयमाश्रमो न भवदीयः किं यौष्माकीणात्रास्ति काचिदनुपपत्तिः किमयं जनो नाहर्निशं दासायते किमस्ति किंचिद्भोगमोक्षाभ्यामपरमपि साध्यं जगति किमाधिदैविकाद्यन्यतमोपि कश्चिदुपपद्रवाभासः समाद्गाद्व्यवहितविप्रकृष्टदृष्टिविषयतां किमस्ति कश्चिदत्रावमन्तापि त्रिविधजीवेषु येन भवादृक्षेषु करुणैककल्पवृक्षेषु स्वविचारैकदक्षेषु विशुद्धाद्वैतमात्रलक्षेषु त्यक्तस्वपरपक्षेषु कृतनिजतपःप्रभावनिखिलविश्वरक्षेषु मामकबहिश्चरप्राणदीक्षेष्वप्येषोत्कलिकेति स्वसौहार्देनैव तान्निनाय निरुत्तरताम् । उचितं चैतत् । तथा हि ।

यः कुत्राप्यनवेक्षितोपि च तमोमात्रात्मकोपि क्रुधा
ग्रासायापि समागतोपि सहसा स्वस्यैव रात्रावपि ॥
तं पूर्णः शुचिरद्वयः सितरुचिः शीतद्युतिः स्वप्रभः
संदृश्यं तनुतेऽमृताखिलकलः सद्यो द्विजेन्द्रः किल ॥२२॥

अथ हेरम्बः पुनः सकलब्राह्मणैः सह रहसि संमन्त्र्य वयं त्वन्न क्रीताः सर्वेपि नैतद्वचनमुल्लङ्घितुं शक्ता इति यदि भवतां सर्वेषामपि रोचते चेत्किञ्चित्तथाऽऽचरिष्यामि येन विशेषतोऽस्यैव तथा विश्वस्यापि स्यादिति सुमङ्गलं परन्तु यदि मद्वचसि विश्वस्यानुज्ञाप्येत युष्माभिरहमिति तदुत्तरं तैरनुमोदितो रहसि भ्रातुः संमतिं गृहीत्वा जयामामन्त्र्यायै जये त्वया जरद्गवीत्वमासाद्य यत्र गौतमास्तिष्ठति तत्र तत्परिसर एव शाल्यङ्कुरचर्वणैः सञ्चणीयं तेन हुंकारमात्रेपि कृते तत्रैव तनुत्यागस्तथाकर्तव्यो य-

थाज्जीवनमरणान्यतरनिर्णयो गीर्वाणगुरुणापि दुर्भेण इति सा तु लीलामात्रेणैव तथा कर्तुं यदा प्रवृत्ता तदा विप्रवृन्दे स्वयमाजगाम । ततश्च तया तथैव कैतवैभिरचिते गौतमस्तां तृणशलाकालेशमात्रेणैव निवारयति यदवधि तदवध्येव सात्रैव तथात्यक्ततनुर्यथा न मृता नापि जीवति इत्येतस्मिन् काले सर्वेषां ब्राह्मणानां महान् हाहाकारात्मकः कलकल एवाविरासीद्वेपथुश्च गौतमतनौ । ततः सर्वेपि निरुक्तद्विजरूपविघ्नेशप्रमुखा ब्राह्मणाः स्वस्वस्थानानि जिगमिषवो गौतमेनागत्य साष्टाङ्गप्रणिपत्यादिना प्रार्थिताः सन्तोपि किमत्रास्माभिर्वक्तव्यं नेयं मृता न च जीवति गौस्तत्र संदिग्धमौनमेव शरणं यत्त्वया वयं पुत्रवत्पालितास्ततः पृष्ट्वैवास्माभिर्गन्तव्यं स्वस्वस्थानानि तपोधनैरिति तमुक्त्वा पुनस्तेनेयं गौर्मूर्छितास्तीति प्रायो जराजर्जरत्वादवश्यं मरिष्यत्येवातोत्रैतन्निष्कृतौ भवन्त एव शरणं यद्यदाज्ञाप्येत श्रीमद्भिस्तदहं श्रीमत्प्रसादेनैवावश्यं साधयिष्याम्येवेत्युक्ताः सर्वैर्मिलित्वाऽयमस्मासु बुद्धिवर एवास्तीत्ययं यद्वदिष्यति तदस्माकं सर्वेषामपि सन्मतमेवेति द्विजरूपिणं विघ्नराजमेवाग्रतश्चक्रुः । अथ सोपि सकलब्राह्मणान् गौतमं च प्रार्थ्य यदि मद्वाक्य एव भवदीया श्रद्धा तर्ह्यहमन्तर्याम्येकप्रेरणयैवेदं वच्मि यद्ब्रह्मकमण्डलुगतं जलं त्रिविक्रमचरणे तेनाभिषिक्तं तन्नखरिनखभिन्नावरणोदकसहितं हरशिरसि गङ्गाख्यं विराजते तदेवानेयं तेनैवेयं भगवती सुरभिस्तावद्रुद्राणां माता सर्वहविर्धानी व्युत्तिष्ठेतेत्यवदत् । तदा किल तत्क्षणादेव दिवः कल्पद्रुमकुसुमवृष्टिरतीवासीत् । ततः स गौतमोपि बाढमिति तदङ्गीकृत्याग्रेर्वेदस्य भवतामीश्वरस्य

---

१ वक्तुमशक्यः । २ गजाननः ।

स कृपया सद्योयं फलतु मत्सङ्कल्पकल्पतरुरिति सम्प्रार्थयामास सर्वानपि ब्राह्मणान् । अथ तेपि भवत्वेवमेवाचिरादित्युक्त्वा यथायथं स्वस्वस्थानमभिजग्मुः । ततः सगजाननोपि सबन्धुः सजयश्चाजगाम सकार्यकः स्वमात्रन्तिकं सानन्दं न्यवेदयच्च तामखिलमिदम् । अतः स गौतमस्तावदहल्यानाम्नीं सहधर्मचारिणीमनुमन्त्र्य गङ्गानयनार्थं कः समुपायः केन वायं विघ्नः सम्पादित इत्येकान्ते प्रणिधानशतैर्याथार्थ्येन विनिर्णीय तदर्थं कैलासाचलमौलिमागत्य तत्र प्रयतः प्रागग्राणिबर्हींष्यास्तीर्य संयतवाक्कायमनाः शुद्धसुधौतसितपरिधानोत्तरीयवसनः सितभस्मावगुण्ठितसकलकायः कलितरुद्राक्षाभरणः सुनिबद्धारुणकलमकणिशपीतजटाकलापः शुक्लयज्ञसूत्रः साक्षाच्छान्तरस एवोदङ्मुखस्तत्र समुपविश्य विशुद्धात्मसच्चिदानन्दकूटस्थब्रह्माद्वैतरूपशिवैकाकारभरितपूर्वं संयमतः स्थित्वाथ चिरतरसंस्कारसंपन्नचिरतरव्युत्थानानन्तरं मधुरतरवागमृतैस्तमेवावाङ्मनोऽगम्यमपि भक्तजनैकानुग्रहार्थं धृतोमार्धविग्रहं तदेकानुसन्धानबन्धुरः शनैरित्थमस्तौत् । तद्यथा ।

यमतुलममलं चिदेकरूपं शिव इति वेदविदो वदन्ति सन्तः ॥
अमितसुखघनं तमेव शान्तं विगलितभेदमुमापतिं नमामि ॥ २२ ॥
सदनन्तचिदेकतोयराशिं जगदाभासनिरासशेषभूतम् ॥
शिवमेकरसं हृगेकसारं परमानन्दमहं सदा भजामि ॥ २३ ॥
योसौ चिदानन्दमयोपि वाणीमनोविलासाविषयोपि[1] साम्बः ॥
दीनानुकम्पाहृतशान्तरूपो विभाति वन्दे तमहं महेशम् ॥ २४ ॥
इन्दुं मौलौ बोधरूपं दधौ यो वामे भागे शेमुषीमेव[2] गौरीम् ॥
कण्ठे शेषं योगमेवं कृपालुः पायादेतं जीवमीशान एषः ॥ २५ ॥

१ मनसा ज्ञातुमयोग्य इत्यर्थः । २ बुद्धिरूपाम् ।

इन्दुमौलिमिहकुन्दसुन्दरं सुन्दरीकलितवामदेहकम् ॥
इन्दिराननमिलिन्दवन्दितं नौमि चन्दिरललाटलालसम् ॥२६॥
शैलजाननसरोरुहगन्धे लोलचञ्चलविलोचनभृङ्गः ॥
गाङ्गमङ्गलतरङ्गिजटालः कोपि भातु पुरुषो गतसङ्गः ॥ २७ ॥
मुनौमुनौ योतितरां विराजते मतेमते वेदशिरो गवामपि ॥
भवेभवे तं भवबन्धहारिणं पदेपदे पावनमीशमेतु धी. ॥२८॥

आभाति वेदान्तविचारिचेतसा-
मानन्दबोधैकरसोपि शङ्करः ॥
आयातु मे चेतसि कोपि सोधुना
गौरीमुखाम्भोरुहराजहंसराट् ॥ २९ ॥

कलितचन्दिरचूडमनातुरं जगदनेकमृगाम्बुतरङ्गकैः ॥
कमपि वेदशिरोमणिमञ्जरीनिचितपादसरोजमहं भजे॥३०॥

पुरो भातुमेकोपि गङ्गातरङ्गै-
रलं शोभमानोत्तमाङ्गोऽङ्गनाङ्गः ॥
चिदानन्दसिन्धुः सदा दीनबन्धुः
कदा मां मुदा पावयेदीश एकः ॥ ३१ ॥

यो विभूतिश्चिति नैजदेहे चिरं
सन्दधातीन्दुमामिन्दुमौलिः शिवः ॥
पातु मामेष आराद्धमानायकः
पुण्डरीकः सतां कोपि पञ्चाननः ॥ ३२ ॥

यो नैजचिन्तनपरं नरं पुनः
कुरुते सदा सपदि देवसेवितम् ॥
तेनैवमेव सकलमीहितं शिवं
साम्बेन सम्फलितमेव सन्ततम् ॥ ३३ ॥

---

१ इन्दुमौलिनम् ।

यमिहानिशं सुपरिचेरुरलं
निगमा अपीशममृतैकनिधिम् ॥
स उदारचारुचरितो हृदये
वसतामुमासहचरः सततम् ॥ ३४ ॥
सदिव विभाति च येन भासता
जगदिदमेणतृडण्बुसंनिभम् ॥
परशिव एष ममान्तरङ्गके
विलसतु हैमवतीपतिः स्वयम् ॥ ३९ ॥
हा किं मे न भवति गोचरः कृपालुः
संसारे बत गिरिजासहाय ईशः ॥
पोतानामिव हरिणीवनान्तराले
किं वाम्भोधर इव खेपि चातकानाम् ॥ ३६ ॥
हन्तैते मामन्तरलं हन्तुमुपेताः
कान्तायाङ्गा जीवदनङ्गाः कृतसङ्गाः ॥
को वा पाता मे भविता शैलसुता या
जीवेशानं शङ्करमेकं तु विनेह ॥ ३७ ॥
सदयं चिदेकनिधिमेकसुन्दरं
गिरिजामुखाम्बुज मिलिन्दमादरात् ॥
उपयामि तं शरणमिन्दिरापतिः
सुरराडभूदिह यदीयतोषतः ॥ ३८ ॥
सा पातु कापि चितिरेकरसातिशोभा
गौरीसखीविगतभेदवती सती च ॥

---

१ मृगजलवत् । २ बालकानाम् ।

मां बालकं सुजननी जननीरधीना-
माधारभूतमरुभूमिरिवातिभूमा ॥ ३९ ॥
शिरसि कलितगङ्गापूरसञ्चारभङ्गै-
रुपमृदितमिवासीदङ्गमादावुमायाः ॥
अथ निजकरतोसौ ताडयामास तां चे-
दतिसदयहृगेषोऽनङ्गहा मां पुनातु ॥ ४० ॥
मतङ्गजाजिनं दधावनङ्गरूपभञ्जकः
कृपानिधिः सतां पतिः स पातु कोपि शङ्करः ॥
यदीयनाम वाचि चेदुपैति सादरं मुदा
तदैव भाति सर्वतोऽमृतैकसागरो नृणाम् ॥ ४१ ॥
कदा मे धीरेषा हरचरणहंसी बत सती
समीपे यातं तं निजपरमहंसं न कलयेत् ॥
चिदानन्दाकारामृतभरितसाराम्बुधिरसौ
शची वाचां भङ्गी ललितसुरसं नैव वलयेत् ॥ ४२॥
कृतं बहुविधं तपो न च गतो ममाधिः पुनः
कृतोपि किल संयमः शममुपैति मोहो न मे ॥
इतः परमुपापतेः पदसरोजरेणुं मनो
महालिरिव सन्ततं भजतु किं वृथा चिन्तनैः ॥ ४३ ॥
किमिह बहुभिः संसाराङ्गैः सुखैरमृतोपमैः
शिवपदरजः सेवा नोचेदये न शमो भवेत् ॥
अत इह मनः शम्भोः पादाम्बुजे युवभृङ्गता-
मनुसरतु मे शान्तं कान्ताकुचान्तविलोकनात् ॥ ४४ ॥
पूर्वं शम्भोः परमकृपया पाविताः कोटिजीवा
मामेवेमं किमिति न भवानिन्दुमौलिः पुनाति ॥

१ नमस्कारकर्तृशीलानाम् ।

किं कान्ताहक्कुवलयकुलं यामिनीनायकोऽसौ
लोलापाङ्गालिवनविसिनरोषवानातनोति ॥ ४५ ॥
भूतोयानलवायुखेन्दुरविभी रूपैः सदा सादरं
जीवानां खलु भोगमेव कुरुषे पुंरूपतो वामृतम् ॥
किं तेनोभयमेककालिकमये ते येन रूपेण मे
भूयादेतदुमायुतेशविशदं किं मे पुरोगं न हि ॥ ४६ ॥
हा हा शम्भो दृगेषा भवतपनमहातापसंशान्तयेऽलं
गाढं पीतामृतानां भवति भवति चेदेष एवेश एव ॥
भूयादेवं तदेनां सुखय करुणया शैलजानायकाऽऽरा-
दायातोयं जनो वः पदमिह शरणं पाहि बोधेन्दुमौले॥ ४७॥
संसारे कोटियोनीरपि जनिमृतिभिः पामरोयं गतोपि
कुन्तानन्ताङ्कभेदैरपि भवति सुखीहन्त कान्ताहगन्तैः ॥
को वा तुङ्गादिगङ्गाललिततरतरङ्गालिरङ्कैकमौलिः
पायादेनं विनोमाहगलिकुलचितं मङ्गलं सङ्गहीनम् ॥ ४८ ॥
आनन्दामन्दकन्दं चिदमृतजनितं योगिचेतोमिलिन्दं
मन्दंमन्दं मृडानीलसदरुणकराराञ्जितं धीमरन्दम् ॥
गोविन्देनापि चेन्दीवरसमनयनापूजितं बोधवृन्दं
वन्दारूणाममन्दं हितजनकमिदं नौमि पादारविन्दम् ४९

एवं स्तुवति सति गौतमे भगवान्हैमवतीशक्तिधरगणपतिप्रभृतिसकलपरिवारपरिवृतो गणपरिलालितचरणः श्रीमानिन्दुचूडामणिस्तस्य पुरत एव प्रादुरासीत्। उचितमेव चैतत्। तथा हि।

सौरालोके सर्वगेप्युष्णरूपे यस्मिन्देशे स्थाप्यते सूर्यकान्तः ॥
तत्रैवास्ते वह्निरविस्तरां तद्भक्तिप्रह्वः पूर्णरूपोपि दृष्टः॥५०॥

अथ वारिधरगगीरगिराराविरजारमणोसवये(?)गौतमभावत्कभक्तिभूमभाग्यभारभङ्गुरान्तरतयाहमतितरसुप्रसन्नोस्मीत्यमरवरैरपि

सुदुष्करमपि यदि परिवाञ्छसि चेदहं सद्य एव परिपूरिष्याम्येव यौष्माकीणाभिलषितगणमपीति तमवादीत् । ततः सोपि सञ्जा-तपुलकावलिसुललितस्वेदबिन्दुस्यन्दविराजमानशरीरः स्ववदान-न्दाश्रुवृन्दः प्रणामपरम्परापूर्वकमतिनतोऽब्रवीत् ।

जटामुकुटमण्डले तव शिवास्ति गङ्गेह या
पुनातु जगतीमसौ मदनुसारतोऽभिषङ्गता ॥
यथा तव मुखे स्थिता श्रुतिरियं समेत्याब्जभू-
मुखाम्बुजचतुष्टयं[1] स्वहितकल्पवल्ली चिरम् ॥ ५१ ॥
एवं गौतमवाक्यं श्रुत्वा तस्मै हरस्तथा दत्त्वा ॥
स्वजटामेकां गङ्गामन्तर्धीयत स तत्रैव ॥ ५२ ॥

ततः स गौतमस्तां जटारूपिणीं गङ्गामादाय सकलदेवर्षि-प्रवरपरिवृत्तो निजाश्रमपरिसरवर्तिनं ब्रह्मणो गिरिमुपेत्य तत्रौन्दु-म्बरमूले तां संस्थाप्य प्रकटीभवनाद्यर्थं संप्रार्थ्य प्रसिद्धगोदा-वरीरूपेण सम्प्रकटीभूतायां तस्यां यथाविधि स्नात्वा प्रागेव निष्कल्पषोपि[2] ब्रह्मविद्यायां निमज्ज्य प्रत्यगात्मेव व्यवहारदृ-ष्ट्यापि निष्पापः सन्निमां पूर्वलवणार्णवं प्रत्यपूर्वतत्त्वविद्यामिव ग्रन्थादिरूपेण शिष्यपरम्परानिकर[3]मखिलविश्वोपकारचतुरः स-विस्तारयन्नेव प्रापयामास । तत्रैवं केवलमुपाधिभेदादेव त्रय्या इव मन्त्रब्राह्मणभागभेदाद्गङ्गायां द्वैविध्यमपि भगीरथ भवता स प्रपञ्चं श्रुतमेवातो यासौ गौतम्यभिधा गङ्गा सा तु त्वत्पिताम-

१ ब्रह्मदेवस्य चत्वारि मुखानि । २ पापरहितः । ३ शिष्यवंशसमूहम् ।

हैः खनितानां तत्तद्भूभागावच्छेदेन तथा तथाभूतानां मध्ये लवणाख्यं सागरं गतैवेति कथमथ त्वत्प्रार्थनशतेनापि समायास्यति यदसौ गौतमं प्रति ब्रह्मगिरौ प्रार्थनोत्तरं प्रथमं दिव्यरूपेण प्रत्यक्षीभूय भो मुने त्वं तु सत्यप्रतिज्ञत्वेन कृतकार्यः सपन्न एवासीत्यतः परमहं कमण्डलुं प्रत्येव गच्छेयं यद्वा ब्रह्मसदनमथवा कूर्माख्यविष्णुसान्निधिं न तु मर्त्यलोकेऽवस्थास्य इति सा सज्जनसङ्गसमुद्वेजितैव गौतमीयभूरितराभ्यर्थनसहस्त्रैरेव तत्तपः-पारवश्यात्सप्तर्षिप्रार्थितसप्तस्त्रोतोभिः समुद्रगासक्ति तु सप्तापि समुद्रास्तदुत्तरमेव निशिं मनुष्यादीन् भक्षयित्वा दिवा समुद्रेषु निमज्जद्भिः कालकेयाद्यैराक्षसैर्विश्वमेव बहुकालं पीडितमितीन्द्रादिसकलप्रार्थनया भगवता कुम्भसम्भवेन लीलयैव निपीता इत्यद्यापि शुष्कखाता एव वर्तन्त इत्यतः प्रागुक्ता येयं कुटिलाख्या भगवती हैमवती गङ्गा ब्रह्मशापेनाम्मयत्वं प्राप्ता तल्लोकमाप्लावयन्ती तेनगर्गादिवाङ्मयबन्धनैः प्रतिबद्धा भगवतः षण्मुखस्य जननी सैव भगवता ब्रह्मादींस्तपसा निरुपमतरं समाराध्य भुवि समानीय पाताले कपिलाश्रमपरिसरं नीत्वा तत्र निपतितसगरभस्मनिकरसमाप्लावनेन तेषां स्वर्गाधिरोहः सम्पादनीय इति भगवान् वसिष्ठाचार्यो यावद्भगीरथमुपदिशति तावद्दिनमणिः प्रत्यगालम्ब्यासीत्। तदानीं किल कलावेदिना सहैव सायन्तनमङ्गलपटहादितूर्यवादनध्वनिः श्रुतिमुपससार स च भ-

१ समुद्वेजिता—उद्वेगिता। २ प्रलयरात्रौ। ३ पश्चिमदिग्गतः।

गवान् वसिष्ठस्त्रेतागारं सोपि देवो भगीरथः स्वकीयं तदेवं सा-
यंसन्ध्यावन्दनहवनादिश्रौतविधिसाधनार्थम् । तत्र च ।

आसीत्प्रत्यगलंविभूषितवपुः सन्ध्यारुणैरम्बरै-
र्वृद्धेनापि च रागिणा भगवता त्रयात्मना भास्वता ॥
पद्मिन्यः सकला वियोगमुकुलीभावंगतैः साहसा-
द्बाष्पाणीव गिलन्ति वक्त्रकमलैरम्बूनि मुग्धा इव ॥९२॥

किं च ।

कोकाः शोकावनद्धं स्थगितगलगलद्बाष्पसंरुद्धशब्दा
हंसाः सशान्तभोगा अपि रविमणयः संहृतौजःप्रसाराः ॥
धिग्घूकाः सावलोकास्तिमिरकरिघटै रोधिते वर्त्मभात्रे
खद्योताः क्वापि किंचित्क्क चन विरचनैरम्बरं रोचयन्ति ९३

अपि च ।

निमग्नायां त्रय्यां चरमशिखरात्प्रत्यगुदधौ
स्वयंज्योतिः साक्षादमृतवपुरासीत्स्फुटतमः ॥
कुमुद्वानप्याराद्विकचनयनेन्दीवरगल-
न्मॅरन्दानन्दाश्रुः कुमुदसितभूत्या धवलितः ॥ ९४ ॥

अपि विष्णुपदे लसन्त्यलं शुचिराजह्रुचयोत्र तारकाः ॥
कुमुदिन्यपि फुल्लमुख्यभूल्लिजॅराजेऽभ्युदयं समागते ॥९५॥
सन्ध्याशोणाम्बरासौ सुललितविलसद्ध्वान्तधम्मिल्लरम्या
तारा हाराभिरामा कुवलयविकचल्लोचनाऽलयञ्जनाढ्या ॥

---

१ अग्निशालाम् । २ गृहमिति शेषः । ३ मार्गमात्रे नेत्रपटलमात्रे च ।
४ मरन्दः पुष्परसः । ५ चन्द्रे ।

श्यामा राज्ञानुरागान्निजकरकलनैर्लालितापि प्रकामं
निर्मोकं स्वाम्बरस्था रचयितुमतुलं लज्जितैवाभिरेजे ॥ ५६ ॥

चकोरनिचयोच्चलच्चटुलकोटिचञ्चूपुट-
च्यवन्नवमरीचिकारुचिरचारुचन्द्रोदयात् ॥
चचार चिरचापलं चतुरचञ्चरीकश्चिरं
चमत्कृतिरसोच्चयाच्चलति चाम्बु चन्द्रोपलात् ॥ ५७ ॥

विमलशशिमुखी च ध्वान्तनीलाम्बरा च
प्रकचकुमुदमध्योल्लोलभृङ्गेक्षणा च ॥
उडुमणिगणभूषा कस्य तोषाय नैषा
बत समभिसरन्ती यामिनी कामिनी च ॥ ५८ ॥

इन्दुः कैरविणीं चिरादुपगतः संदर्शयन् कौमुदी-
कौशेयं करलालितास्मितमुखीं पूर्वं वियोगालसां ॥
तद्दृष्ट्वैव किमेतदीयहृषदः सद्यः स्रवन्त्युत्सुकः
किं चैते मधुपा भ्रमन्ति च मुधा सौरभ्यलोभात्किल ५९

त्रय्यात्मस्वधवैकचेतसमसौ मुग्धां शशी पद्मिनीं
ध्यायन्तीं विरहातुरां स्वकरतः पस्पर्श साध्वीं नु यत् ॥
तेनैवास्य सितद्युतेरपि शुचेरप्यब्धिसूनोरपि
श्रीबन्धोरपि लाञ्छनं समभवद्रागाय तस्मै नमः ॥६०॥

आयातः स्वपतिः प्रदोषसमये रागीति किं श्यामया
सत्काराय भमौक्तिकानि गगने वृष्टानि लाजोपमम् ॥

---

१ कराः किरणा हस्ताश्च ।

किं चाढ्यं तिमिरातिनीलवसनं संध्योल्लसत्पल्लवं
दीर्घं सम्परिधाय चोत्पलदृशा प्रत्युद्गतं चादरात् ॥६१॥

अथ विहितसायाह्निकक्रियः स राजा भगीरथः स्वतः स्वकचिन्ताशून्योपि कथमसौ गङ्गाभुवमुपैष्यतीत्यादि व्यावहारिकपरिकल्पितचिन्तनातुर एव किञ्चिदुपलब्धनिद्राभासः संजातसूतमागधबन्दिवृन्दकृतस्तुतिशतसंमिश्रितब्राह्ममुहूर्तसूचकनियततूर्यमधुरतरविरावनिकरैः साकमेव कुसुमासितशय्यातलात्पयोधिमध्यवर्तिशेषतल्पात् नारायण इव श्रीनिषेव्यमाणचरणारुणनलिनतलः समुत्तस्थौ निर्वर्तयामास च स्वचिदनुसन्धानादिसकलयथाविधितात्कालिकश्रौतादिनित्याह्निकसत्कर्मकलापम् । तदानीं तावत् ।

बभूव नवरागिणी बत पुरन्दराशाचिरा-
त्सुसंयतलसत्तमश्चिकुरभारभूषाभरा ॥
अतीव निकटागमद्वनुपरस्पराालिङ्गन-
स्मरोत्सवसमुत्सुकस्तनमदार्तकोकद्वया ॥ ६२ ॥

प्राच्या प्रियया साकं जाते नवसङ्गमेऽतिरागवतः ॥
तस्यास्तारामौक्तिकहारस्त्रुटितोभवत्किमयम् ॥ ६३ ॥

ऐन्द्रीयं हरिणा परेण रमतेऽश्लाघ्यं किमस्मात्परं
पद्मिन्यो मधुपान् स्वकोशनिहितानुद्घाटितुं चोत्सुका ॥
इत्यालोच्य किमु प्रतीचि समगात्खिन्नो द्विजेन्द्रः क्षणात्कापीयुः किल तारकाः सति तनोर्ध्वंसेपि सद्वृततः ॥६४॥

---

१ सम्प्राप्तः । २ कोकश्चक्रवाकः ।

भूयाद्योगश्चिरविरहयोः शोचतोः सुद्विजात्यो-
र्दम्पत्योस्तद्घटनरचनारोधिनीश्रीद्विजेशे ॥
पश्चाद्याते सति समगमत्किं कृपालुः सखीव
श्यामा कृत्वा तदुभयरतेः प्रोदितं भानुदीपम् ॥ ६५ ॥

हंसास्तु मानससरोरुहसंविकासा-
दासाद्य सारतरसूत्ररसं सुहृष्टाः ॥
अप्यात्मनः समुदयेन तमोनिरासे
जाते सति क्व किल शोकलवो द्विजानाम् ॥ ६६ ॥

किं च ।

संघर्षः किलः चक्रयोरथ भवेदत्र स्थितिर्नोचिता
कान्तानां सुतरामुदेष्यति महाचण्डद्युतिस्तापकृत् ॥
इत्यालोच्य किमु द्विजेश्वर इतः श्यामां समादाय सः
प्रागात्क्वापि सतारकावलिमहामुक्ताविभूषां द्रुतम् ॥६७॥

शुशुभे रविरम्बरोदरे किल बालोऽप्यतुलप्रभाभरः ॥
मुमुदेथ सुरेशदिग्वधूर्नवसूताप्यतिरागशालिनी ॥ ६८ ॥

अपि च ।

अम्भोजिन्यः स्वकान्तागमनमनुमुखाम्भोजतस्तद्वियोग-
ज्वालामालाकरालानलजनितमहाधूममेवोद्गिरन्ति ॥
अन्तर्लीनालिमालापसरणमिषतः सूर्यकान्तास्तु हार्दं
किं ब्रह्मज्योतिरेव स्वगुरुवरपदे पूजनायार्पयन्ति ॥ ६९ ॥

ततः स भगीरथस्तावद्यथ्याव‌द्वैतमूलीभूताविद्यानिवृत्तेरपि प्रय-
त्नसाध्यत्वानुभूतब्रह्मविदः क्रियमाणकाम्यादिकर्मणस्तदश्लेषेपि

तस्य पुंत्रादायमुपयन्ति सुहृदः पुण्यं कृत्याद्विषन्तः पापकृत्यामिति श्रुतेः स्वसुहृत्सु तत्सम्बन्धसंभवेनाधिमात्रस्य तीव्रसंवेगानुप्रयुक्तस्य काम्यस्यापि निरुक्तगङ्गानयनार्थं क्रियमाणस्यासंप्रज्ञातसमाध्यादिरूपस्य तपसः सद्यःफलजनकत्वोपपत्तेश्च कृततत्कृत्यध्यवसायः पूर्ववयस्त्वेन बालप्राय एवानपत्योपि त्रेताग्निनिकटे स्ववधूटीं मन्त्रिवरनिकटे प्रजापालनपरिपाटीं चोपस्थाप्य यथाविधि मङ्गलानुष्ठानपूर्वकं सम्पादितसकलप्रास्थानिकविधिः समासादिततपस्विवेषः श्रीवसिष्ठाख्यस्वकुलाचार्यचरणनखचन्द्रकिरणान् प्रणम्यायाहि शीघ्रमवाप्तवाञ्छित इति तैराशीःकल्पलताकुसुमवर्षणतः समानन्दितश्च गोकर्णाख्यं महाक्षेत्रं गत्वा चतुराननप्रसादोद्देशेन यमनियमाद्यष्टाङ्गयोगपरिपाकपूर्वकं निर्विकल्पसमाधिरूपं तपश्चचार ।

अकलितसकलप्रपञ्चजालः<br>
सदमितसौख्यचिदेकभूमनिष्ठः ॥<br>
शिरसि समवरोधितासुचेताः स<br>
किल रराज भगीरथो नृपेन्द्रः ॥ ७० ॥

एवं तपस्यतस्तस्य सञ्जायमाने सत्येकसहस्रवर्षेप्युत्थानानवकलनेनातिपुण्यमहाक्षीरार्णवकल्लोलपरिप्रेरितः स भगवान् विधिः सकलेन्द्रादिसुरवरनिकरैः सह तत्रागत्य तं समाधेः सकाशात् व्युत्थाप्य भो भगीरथ भवदीयतपःप्रभावमाग्यवैभवभर-

---

१ पुत्रादायं पुत्रं आदातुम् । २ स्वतरुणीम् ।

भङ्गुराङ्गतयाहमद्य परितुष्टोस्मीति इष्टवरमभिवरयेति तमाचष्टे। अथ सोपि निरुक्ततपःक्लेशोपि तत्प्रसादपरिपुष्टः प्रेमामृतपरिप्लुतश्च सञ्जातफुल्लपुलकावलिसुललितः स्वेदबिन्दुमौक्तिकनिकरपरिपूरितशरीरः संपन्नवेपथुः प्रातस्तनपद्माकर इव समुन्मीलितमुखाम्भोजश्च प्रमोदबाष्पोदबिन्दुमकरन्दपरिपूरितलोचनेन्दीवरद्वन्द्वः शिरोनिहितसंयोजितकरकोकनदद्वन्द्वश्च समवरुद्धकण्ठतटपयोदमिव नीलकण्ठोतिप्रण.तस्तमूचे ।

यद्यास्ते तपसः फलं च विकलं यद्यस्ति लोकेश ते
प्रीतिर्मय्यतुला च तर्हि भगवन्नस्तु द्वयं वाञ्छितम् ॥
गङ्गाम्ब्वाप्लुतभस्मतादिवशतः स्वर्यातु सद्यः सुखं
सर्वे ते सगरात्मजामनुकुलं संवर्धतां चानिशम् ॥ ७१ ॥

ततः स भगवांश्चतुराननस्तावद्वाभ्यां आननाभ्यां तस्मै वरद्वयं दत्त्वा तृतीयेनाननेन तत्रैव दिव्यरूपेणागतां मूर्तिमतीं भगवतीं गङ्गां प्रति मर्त्यलोकं गन्तुमाभाष्य चतुर्थेन तेन भो भगीरथेयं भगवती गङ्गा तावन्मर्त्यलोकं भवदर्थमुपयास्यत्येवाथाप्यस्यास्तावद्वेगः पृथ्व्यां तद्धारवरेण वा नैवधारयितुं शक्योन्यथा तां भित्त्वैवेयं रसातलमेव गमिष्यतीति भवतोपि भवदभिमतस्थलाप्रवेशेन श्रमवैयर्थ्यापत्तिरिति तद्वेगधारणार्थं भगवानुमारमण एव त्वया समाराधनीय इति तमुक्त्वा सत्यलोकमगात् ।

अथ भगीरथः सद्य एवकैलासाचलमागत्याचलतयैव सव्यचरणाङ्गुष्ठाग्रावलम्बितभूभागः प्राग्वद्धर्ममेवसमाधिस्थ एवैकसंव-

---

१ प्रातःकालीन पद्मसमूह इव ।

त्सरपर्यन्तं तपश्चचार । समस्तौच्च तदुत्तरं सति व्युत्थाने भगवन्तं पार्वतीपतिं प्रागुदीरितगौतमोक्तस्तुत्यादिवत् ।

शम्भो त्वं निखिलात्मकोपि भगवन्बालं न मां पासि
चेदस्माद्दुत्कटसङ्कटात्क नु भवेद्विश्वेशता तावकी ॥
किञ्च स्याद्विफला जगज्जनकतेत्यद्यैव मे दर्शनं
दत्त्वा साधय मामकेप्सितमतस्तुभ्यं नमः स्वात्मने ॥७२ ॥

तदुत्तरं परमकारुणिको भगवानपर्णारमणः सर्वस्वरूपत्वात्तत्रैव सद्यः प्रादुर्भूय भो भगीरथ त्वं मत्तोऽभीप्सितं वरं वृणीष्वेति तमाश्वास्य तद्दर्शनमुदितमानसेन तेन स प्रणामसहस्रं भो भगवन् यदि कृपामृतसमुद्रः सुप्रसन्नोस्ति भगवांस्तर्हि मत्पितामहाख्यसगरसुतसमुद्धरणार्थं भूमौ भवदेकप्रसादेन निपतिष्यमाणसुरतरङ्गिण्यास्तावद्वेगधारणं श्रीचरणैकनिघ्नमिति तदेव मह्यं वितरणीयं करुणयेति भगीरथेन सम्प्रार्थितश्च बाढमित्यङ्गीकृत्य तदैव तेन सहैव हिमालयमगात् । ततस्तत्र गत्वा तदुच्चतरशिखरमधिरुह्य स भगवान् महेश्वरो महत्तरं जटाकलापं बहुयोजनविस्तारं विप्रकीर्य गङ्गामूर्ध्वनिरीक्षणेन त्वं निपतस्व यथेच्छमित्याभाष्य ततस्तां निरुपमवेगस्फूर्जथुशब्दपूर्वकापूर्वजलधारासहस्रप्रपतनैर्विनिपतन्तीमपि नूतनोत्फुल्लमालतीमालायमानामेव लीलयैव कपर्दमण्डले धृत्वा तत्पृषल्लेशोपि यथा न दृग्गोचरस्तथा निमेषादेवाकरोत् । अहो किमत्राश्चर्यम् ।

---

१ स्तुतवान् ।

यल्लीलामात्रलेशोऽप्यखिलमिदमहो दृश्यमाहेन्द्रजालं
यत्र ब्रह्माण्डमालागणनमपि विधेरप्यगम्यं स एषः ॥
साक्षात्साम्बः स्वभक्तातुलितकरुणया यत्र धर्तुं प्रवृत्त
स्तत्राभूदद्य गङ्गाऽनवकलितवपुर्विस्मयः कस्तदायम् ॥७३॥

अथ सा गङ्गा तत्रैकसंवत्सरपर्यन्तमपि परिभ्रममाणापि तज्जटापटलस्य क्वाप्यन्तमलभमानैवात्यन्तं भग्नगर्वा भगवती हैमवती श्रुतिरिवासीत् । ततः स भगीरथः पुनः श्रीशङ्करं करुणाकरमेव गङ्गावाप्त्यर्थं संप्रार्थ्य तेनैकजटाग्रमात्रनिष्पीडनेन प्रकटीकृतासौ हैमवती गगनहरशिरःपृथ्वीतलाख्यात्रिपथगा भगवती गङ्गा महास्रोतसाऽऽजिगमिषुरभवादित्यनन्तरमतुलहृष्टमानसः प्रयत्नसाफल्यतः सुपुष्टरोमाञ्चस्तामातिप्रणतिशतसन्ततिपुरस्कारेण श्रुत्युक्तैः स्वोक्तैश्च वचोमृतैराभिष्टूय अये मातर्मयाग्रे गम्यते तदनु मत्पृष्ठत एव तत्र भवत्या भवत्याऽनुकम्पया समागन्तव्यामिति तां संप्रार्थ्य स्वानुगामकरोत् । अहो नैतदद्भुतमनन्तप्रयत्नवतस्तस्य ।

भक्तं भक्तिरथोविरक्तमपि वा यायाद्विरक्तिर्यथा
मुक्तं मुक्तिरुतापि शक्तमतुला शक्तिश्च लोकादिषु ॥
एवं याति भगीरथं भगवती गङ्गा तदेकानुगा
चेत्कोवात्र सुविस्मयः किमलभेच्छास्त्रोक्तयज्ञैः पुमान् ७४

---

१ सहस्रधाराभिः । २ पूज्यया । ३ त्वया । ४ अनुगा भक्त्या पश्चाद्गमनकर्त्री च ।

अथ भगीरथानुसारेण गच्छन्ती भगवती गङ्गा मध्ये क्वचिद्देशविशेषे जह्नुनाम्नो राजर्षेर्यज्ञमण्डपमाप्लावयन्ती ततोऽध्वर्युप्रमुखाखिलऋत्विग्भिः प्रार्थितेन तेन स्वतपःसामर्थ्यान्निजवदनं प्रसार्य सद्यः कुम्भसम्भवेनाम्भोधिसप्तकवन्निपीतासीत्[1] । ततः पृष्ठतो यावद्भगीरथोऽवलोकयति तावत्तामनुपलभमानः परमखिन्नः स्तुत्यादिना भूरिकालेन तमपि प्रसाद्य परितुष्टेन तेन स्वदक्षिणकर्णतो विनिष्कासितां तां गृहीत्वा पुनः प्राग्वदेवागमत् । अत एवाख्यायन्ते पुराविद्भिः 'श्रेयांसि बहुविघ्नानि भवन्ति महतामपी'ति । ततश्चात्र ।

ब्रह्माद्याः सकलाः सुराः समगमन् गन्धर्वविद्याधराः
सर्वे चापि महर्षयश्च मुनयो देवर्षयश्चाप्यलम् ॥
नागाश्चाप्सरसश्च विश्वजननीं गङ्गां जगत्पावितुं
यान्तीं चापि भगीरथानुगतितो मूर्तां प्रयत्नावलीम् ॥ ७५॥

किं च ।

तामभ्यर्च्य जगत्त्रयस्थितजनाः सर्वेऽपि मोदं गताः
साक्षाच्चिन्मयरूपिणीं द्रवमयीं गङ्गां जगत्पावनीम् ॥
आसीत्तत्र महोत्सवो दिवि तथा भूयान्भुवि प्रोन्नतै-
र्नृत्यैरप्सरसां च तूर्यनिनदैर्गन्धर्वगीतैरपि ॥ ७६ ॥

ततः सा क्वचिच्चञ्चला क्वचित्कुटिला क्वचिद्विस्तीर्णा क्वचिन्मन्थरा क्वचिदुद्धता क्वचित्सावर्ता क्वचित्फेनहासवती क्वचिदति

---

१ अगस्त्य ऋषिणा ।

वेगवती क्वचिदगाधा क्वचिदुत्ताना क्वचिदनातिनम्रा क्वचिन्महोर्मिमालिनी महावाग्मिवाणीव तथानन्तशिशुमारोरगवैसारिणकमठकुलप्रभृतिबहुविधजलचरशालिनी क्वचिदद्रिरूर्ध्वं व्युत्थायाधः पतन्ती पद्भिरश्विनीव शुशुभे । अपि च ।

त्रैलोक्यस्य तु मौक्तिकावलिरसौ किं यज्ञसूत्रं विराट्
पुंसः किं जगती सती सुललिता सन्मालती मालिका ॥
विश्वस्यानुपमं सितं सुघटितं किं वोत्तरीयं नवं
रेजे चारुतरं भगीरथमहायत्नेन भागीरथी ॥ ७७ ॥

अथ स भगीरथः प्रयत्न एव मूर्तिमान् राजर्षिः स्वानुयायिनीं तां मूर्तिमतीं भगवतीं सिद्धमेव हैमवतीं गङ्गामादाय भारतवर्षमनुप्रविष्टां तज्ज्येष्ठां पूर्वोक्तां भगवतीं गोदावरीं गङ्गां गौतम इव पूर्वलवणार्णवमेव जलशून्यं तदानीमगस्तिनिपीतत्वेन खातमात्रं नीत्वा तत्रत्यबिलद्वारा पातालं गत्वा तत्र भगवतः कपिलरूपिणो विष्णोराश्रमपरिसरे तच्छापभस्मीभूतसगरकुमारभस्मराशिमनया समाप्लाव्य भगवन्तं कपिलं प्रणम्य तेनानुज्ञातो गङ्गाप्रसादतस्तेनैव मार्गेण गङ्गासागरसङ्गमस्थल एवोर्ध्वमागम्यात्रास्थितानां प्रागुक्तब्रह्मादीनां निखिलानां जगत्त्रयवासिजनानां दर्शनं गृहीत्वा भगीरथ त्वं धन्योसि धन्योसीति सर्वसमुच्चारितस्वयशःपटहमिव श्रुत्वा ब्रह्मणा भो भगीरथ त्वत्पितामहाः षष्टिसहस्रसगरपुत्राः सर्वे सद्य एव दिव्यवसनानुलेपनमाल्याल-

---

१ तैसारिणा मत्स्याः । २ वडवा । ३ आश्रमस्यासमन्तात् ।

कृतवपुर्वराः स्वर्गमधिरूढाःसमभवन्नप्सरः सुललितविमानैः स्थास्यन्ति च ते तत्र यावद्देतेत्र वर्तन्ते तत्कृताः सागराः पूर्वमगस्तिनिपीता अपीदानीमनया त्वत्कीर्तिपताकया गङ्गया लवणाब्धिप्रवेशक्रमेण सप्तापि तद्देशावच्छेदतस्तत्तदात्मतां प्राप्तेन स्वजलेनैव परिपूरितास्तावदेव तथास्यास्त्वदानीतायाः साक्षादम्मध्याश्रितेर्हैमवती गङ्गा भागीरथीति त्रीणि नामान्यपि तावत्कालं प्रसिद्धिं यास्यन्त्यतस्त्वमस्यास्तोये समाप्लावयात्मानं तर्पयस्व च पितॄन् विन्ध्यस्य दक्षिणे भागे गौतमी गङ्गा यथा तथोत्तरे भागेपीयं भागीरथीति तमाज्ञाप्य सुरादिभिः सह स्वलोकगमने सम्पादिते तदुत्त्यनुसारेण गङ्गासागरसङ्गमे स्नात्वा यथाविधि पितृतर्पणादि विधाय जय जय जगज्जन्मादिमूलप्रकृते मातः सकलश्रुतिकबरीभारमहामालतीमालायिता कृते निखिलगगनतलवनमालिवपुः समर्पितविश्वपुण्यलक्ष्मीस्वयंवरपुण्डरीकवरमाले ब्रह्माण्डपद्मगर्भविलसशीले जय जय जीवजन्मजराजालदावानलप्रचण्डपीयूषधारे सर्वसंसारवारांनिधिकल्पद्रुमदारुमवमहातरे कलुषकुलाचलकुलशतकोटिशतकोटिचूर्णीकरणपटुतरशातकोटे निजसंवर्णनपरिमण्डितप्रथमतमकविदिव्यभारतीशतकोटे जय जय जम्बूद्वीपमहापद्माकरविहरमाणराजहंसावले व्योमेन्द्रनीलमयसपर्यापात्रवर्तिसाहिमवालुकमलयनपङ्कशङ्करपारितोषकररसाले वियदेकनवकुवलयकार्णिकावलयाविलसमानमराले वेदमहादेवशिरोभूषणीभूतसितद्युतिकले जय जय जगदम्बिकालम्बितस्वकबरीपरिप्रसाधनच्छलजलकल्लोलतर्जने सर्वदुःखपर्वतवज्राकार-

निजधाराधोरणीसमुद्धृतब्रह्माण्डमण्डलान्तर्जने शिथिलीकृतसक-लभोगमोक्षसाधनसमाराधनप्रयासे लीलामात्रसम्पन्नस्वीयस्मरण-क्षणैकवितारितसर्वसमभिलषितभोगमोक्षलक्ष्मीविलासे जय जय ज-ह्नुमुनिकन्यकात्वकलितनैजश्रुतिजन्यत्वविख्यापने कृताखिला ज्ञानतपःप्रविलापने ब्रह्मविद्यात्मसद्युवतिहारलते वितारितस्वसं-पृक्तयावज्जीवसभिलषितसततसद्व्रते जय जय जगतीसीमान्तिनीध-म्मिल्लसंमिलितकेतकीकलिके मुक्तिमहाशुक्तिमौक्तिकावलिके स्व-र्वधूनिधुवनसंघटनपटुतरचारुचेटिके सम्पूर्णहितसाधनचिन्तामणि-गणस्फटिकपेटिके जय जय जगदीशजटाजूटपुरटकुटीरतटविहा-रधीरवधूटिके मनुकुलसुकृतसंफुल्लकल्पद्रुमसितैकसुकुसुमिताविला-सवाटिके हरिचरणनलिनविलसन्नखामृतमयूखनिःसरन्महाभक्ता-नुकम्पैकपङ्केरुहजीवातुशरत्समुदयवशमहासारमरन्दपीयूषमहासा-रसरणे कमलासनकमण्डलुमध्यमण्डलमण्डनप्रचण्डपाण्डित्यधुर-न्धरकरुणे जय जय जर्जरतरजगदिन्द्रजालभञ्जनचिदङ्गनानिरञ्ज-नरञ्जनचञ्चुरतरवीचिके सर्वाद्वैतविद्याविलासिनीविलासरोचके कै-वल्यकल्पवल्लीकुसुमपरिमलमहाहरे निःश्रेयसकासारसरसीरुहमौ-नमुद्राहरे जय जय जातरूपधरनरवरविहारावरोधःसम्पत्तिस-म्पन्नरोधःसाधुशुद्धे स्मरणवीक्षणस्नानपानादिपावितसकलबुद्धे स-द्यःसमुन्मूलितयावद्दृश्यदुःस्वप्नसङ्गे भगवति भागीरथि गङ्गे नम-स्ते नमस्ते पाहिपाहि मां भूय इत्यभीष्टूय कृतकृत्यः सन् सान-

१ जीवनौषधम् ।

न्दं ससुमङ्गलं साकेतमागत्य सारुन्धतीकश्रीवसिष्ठचरणावभिवा-
द्य यथावत्सर्ववृत्तं विनिवेद्य स्वसौधमागत्याग्नीनाधाय नित्याद्य-
खिलकर्माणि यथाविधि कुर्वन् स्वधर्मपत्न्यां ककुत्स्थाख्यं पुत्रं
ह्मवरप्रसादेन समुत्पाद्य स्ववर्णाश्रमधर्मेण सप्तद्वीपाया रत्नग-
र्भाया ऐहिकाद्यानन्दं राज्यं पालयामास ।

भागीरथी जयति सा यदपाङ्गपाता-
च्चम्पूकथाऽभवदियं सरसातिरम्या ॥
तत्पादमात्रकृपयैव भुवीयमास्तां
संसेव्यतां च विबुधैः किल सेवयावत् (?) ॥ ७८ ॥

श्रीनारायणदेशिकेशचरणाम्भोजे नमाम्यन्वहं
श्रीमत्सद्गुरुमस्करीन्द्रपदयोः पांसून्भजे प्रत्यहम् ॥
श्रीमत्सच्चिदनन्तभूमपरमानन्दाद्वितीयेश्वर-
स्वाचार्यास्मरवृत्तमाङ्घ्रिकमले स्तो मस्तके नः सदा ७९

श्रीनारायणसंज्ञनैजजनकाङ्घ्र्यम्भोजमानोम्यहं
तद्वत्तां जननीमपि प्रतिदिनं प्रेम्णान्नपूर्णाभिधाम् ॥
पञ्चानामपि पादपद्मनिचये भागीरथीसत्कथा
स्वानन्दाय मयाऽच्युतेन महता यपत्नेन संयोजिता ८०

श्रीशालिवाहननराधिपशाकवर्षे
भावाभिधेथ रसरामुनीन्दु १७३६ संख्ये

---

१ अयोध्याम् ।

मासे नभस्यपुरुषोत्तमसंज्ञके च
शुक्लेरवेरपि तिथा १२ वियमास पूर्णा ॥ ८१ ॥
रघुवरगुरुपदकमलं नत्वा कृतमस्य तुष्टये काव्यम् ॥
इदमच्युतेन वसता सत्क्षेत्रे पञ्चवट्यभिधे ॥ ८२ ॥

श्रीमत्पदवाक्यप्रमाणक्षीराब्धिविहारिश्रीमदद्वैतविवेन्दि
रारमणश्रीमन्नारायणसूरिचरणसरोजरेणुनामोडकोपनाम्ना
अच्युतशर्मणा विरचिते श्रीभागीरथीकथाख्ये चम्पूकाव्ये
गौतमीभागीरथ्यवतरणप्रथात्मा सप्तमो मनोरथः सम्पूर्णः

टीका समाप्तम् ।

मुद्रितमेतन्मुम्बय्यां गोपाळनारायणजनतया स्वकीये मुद्रालये